आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम् ॥”
इति स्मृतिः ॥
ग्राम्यशस्यानि यथा,—
“व्रीहयश्च यवाश्चैव गोधूमाश्चाणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः ॥”
उदाराः दीर्घशालयः ।
“माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ।
आढ़क्यश्चणकाश्चैव शाणाः सप्तदश स्मृताः ॥
इत्येता ओषधीनान्तु ग्राम्याणां जातयो मुने ॥”
ग्राम्यारण्यशस्यानि यथा,—
“ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्द्दश ।
व्रीहयश्च यवा माषा गोधूमाश्चाणवस्तिलाः ॥
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः ।
श्यामाकास्त्वथ नीवारा जर्त्तिलाः सगवेधुकाः ॥
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने ।
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्द्दश ॥”
इति विष्णुपुराणे १ अंशे ६ अध्यायः ॥*॥
नवशस्यसम्भोगनक्षत्राणि यथा,—
“अनुराधा मृगशिरो रेवती चोत्तरात्रयम् ।
हस्ता चित्रा मघा पुष्या श्रवणा च पुनर्व्वसुः ॥
रोहिणी नवशस्यादिनवद्रव्याशनादिषु ।
प्रशस्तं नवपीठादिसम्भोगं ग्रहविद्वदेत् ॥”*॥
नवशस्यश्राद्धादिकालो यथा,—
“शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥”
इत्यनेन शरद्वसन्तविहितनवशस्येष्टेः ।
“श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः ।
प्रागयज्ञं युज्यतेऽवश्यं न त्वत्राग्रयणात्ययः ॥”
इति कालान्तरदर्शनात् श्राद्धेऽपि तथा ।
आग्रयणं नवशस्येष्टिः ।
“वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः ।
अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् ॥
धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु ।
पितरस्तत्र गृह्णन्ति नवान्नामिषकाङ्क्षिणः ॥”
अपरे कृष्णपक्षे ।
“पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः ।
भवेत् जन्मान्तरे रोगी पितॄणां नोपतिष्ठते ॥
यद्यपि व्रीहिपाके च यवपाके च पार्थिव ।
न तावाद्यो महाराज विना श्राद्धं कथञ्चन ॥”
इति विष्णुधर्म्मोत्तरवचणे श्राद्धं प्रति व्रीहियवपाकयोर्निमित्तत्वं प्रतीयते । तथापि नवोदके नवान्ने च इति शातातपवचने पूर्व्वोक्तबहुषु वचनेषु च नवान्नस्य श्रुतेर्नवान्नत्वेनैवोभयसाधारणं निमित्तं लाघवात् । अभिलापवाक्ये नवान्नागमनिमित्तमिति नियोज्यम् । न तु यवान्नागमादि । वृश्चिके शुक्लपक्षे च इति तु धनुरादिपर्य्युदस्तेतरगौणकालमध्ये वृश्चिकस्य प्राशस्त्यमात्रार्थं न तु श्राद्धान्तरार्थमिति । इति मलमासतत्त्वम् ॥ अन्यत् नवान्नशब्दे द्रष्टव्यम् ॥
शस्यध्वंसी, [ न् ] पुं, ( शस्यानि ध्वंसयतीति । ध्वंस + णिनिः । ) तुन्नवृक्षः । इति शब्दचन्द्रिका ॥ शस्यनाशके, त्रि ॥

शस्यमञ्जरी, स्त्री, (शस्यस्य मञ्जरी ।) अभिनवनिर्गतधान्यादिशीषकम् । शीष इति भाषा ॥ तत्पर्य्यायः । कणिशम् २ । इत्यमरः ॥ कणिशः ३ कणिषः ४ । इति तट्टीका ॥
शस्यशूकं, क्ली, ( शस्यस्य शूकम् । ) शस्यस्य तीक्ष्णाग्रम् । शुङ्गा इति भाषा । तत्पर्य्यायः । किंशारुः २ । इत्यमरः ॥
शस्यसम्बरः, पुं, सालवृक्षः । इत्यमरः ॥
शस्यात्, त्रि, शस्यभक्षकः । शस्यं अत्ति इत्यर्थे अदधातोः कर्त्तरि क्विप्प्रत्ययेन निष्पन्नमेतत् । इति मुग्धबोधव्याकरणम् ॥
शस्यारुः, पुं, क्षुद्रशमीवृक्षः । इति शब्दरत्नावली ॥
शांशपः, पुं, शिंशपाया विकारश्चमसः । शिंशपाशब्दादण्प्रत्यये इकारस्य आङादेशेन निष्पन्नमेतत् । इति सिद्धान्तकौमुदी ॥
शांशपायनः, पुं, मुनिविशेषः । इति पुराणम् ॥ (यथा, विष्णुपुराणे । ३ । ६ । १८ ।
“काश्यपः संहिताकर्त्ता सावर्णिः शांशपायनः ॥” )
शाकं, क्ली, पुं, (शक्यते भोक्तुमिति । शक + घञ् ।) पत्रपुष्पादि । साग इति हिन्दीभाषा । तत्पर्य्यायः । हरितकम् २ शिग्रुः ३ । इत्यमरः ॥ सिग्रुः ४ । इति तट्टीका ॥ हारितकम् ५ इति शब्दरत्नावली ॥ अथ शाकवर्गः । तत्र शाकनिरूपणम् ।
“पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्यात् यथोत्तरम् ॥”
अथ शाकानां गुणाः ।
“प्रायः शाकानि सर्व्वाणि विष्टम्भीनि गुरूणि च
रूक्षाणि बहुवर्च्चांसि सृष्टविण्मारुतानि च ॥
शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं
वर्णं विनाशयति रक्तमथापि शुक्रम् ।
प्रज्ञाक्षयञ्च कुरुते पलितञ्च नूनं
हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः ॥
शाकेषु सर्वे निवसन्ति रोगाः
सहेतवो देहविनाशनाय ।
तस्माद्बुधः शाकविवर्जनञ्च
कुर्य्यात्तथाम्लेषु स एव दोषः ॥”
इति भावप्रकाशः ॥
अपि च ।
“सर्वशाकमचाक्षुष्यमलङ्घ्यममैथुनम् ।
ऋते पटोलवास्तूककाकमाचीपुनर्नवाः ॥”
इति राजवल्लभः ॥
शाकः, पुं, वृक्षविशेषः । सेगोन् इति भाषा । तत्पर्य्यायः । शाकवृक्षः २ शाकाख्यः ३ खरपत्रः ४ अर्जुनोपमः ५ । इति रत्नमाला ॥ क्रकचपत्रः ६ शरपत्रः ७ अतिपत्रः ८ अहिरुहः ९ श्रेष्ठकाष्ठः १० स्थिरसारः ११ गृहद्रुमः १२ । अस्य गुणाः । सारकत्वम् । पित्तदाहश्रमापहत्वञ्च । अस्य वल्कलगुणाः । कफनाशित्वम् । मधुरत्वम् । रूक्षत्वम् । कषायत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ शक्तिः । इति मेदिनी ॥ शिरीषवृक्षः । इति शब्दरत्नावली ॥ नृपभेदः । इति विश्वः ॥ द्वीपविशेषः । तस्य विवरणं यथा,—

सूत उवाच ।
“शाकद्वीपस्य वक्ष्यामि यथावदिह निश्चयम् ।
कथ्यमानं निबोधध्वं शाकद्वीपं द्विजोत्तमाः ॥
जम्बुद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः ।
विस्ताराद्द्विगुणश्चापि परिणाहः समन्ततः ॥
तेनावृतः समुद्रोऽयं द्वीपेन लवणोदधिः ।
तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः ॥
कुतएव च दुर्भिक्षं क्षमातेजोयुतेष्विह ।
तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषिताः ॥
शाकद्वीपादिद्वीपेषु सप्त सप्त नगास्त्रिषु ।
ऋज्वायताः प्रतिदिशं निविष्टा वर्षपर्वताः ॥
रत्नाकराद्रिनामानः शोभावन्तो महाचिताः ।
समाचिताः प्रतिदिशं द्वीपविस्तरमानतः ॥
उभयत्रावगाढ़ाश्च लवणक्षीरसागरौ ।
शाकद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान् ॥
देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते ।
प्रागायतः स सौवर्ण उदयो नाम पर्वतः ॥
तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्ति च यान्ति च ।
तस्यापरेण सुमहान् जलधारो महागिरिः ॥
सैव चन्द्रः समाख्यातः सर्व्वौषधिसमन्वितः ।
तस्मान्नित्यमुपादत्ते वासवः परमं जलम् ॥
नारदो नाम सैवोक्तो दुर्गशैलो महाचितः ।
तत्राचले समुत्पन्नौ पूर्वं नारदपर्व्वतौ ॥
तस्यापरेण सुमहान् श्यामो नाम महागिरिः ।
यत्र श्यामत्वमापन्नाः प्रजाः पूर्वमिमाः किल ॥
स एव दुन्दुभिर्नाम श्यामः पर्वतसत्तमः ।
शब्दमृत्युः पुरा तस्मिन् दुन्दुभिस्ताड़ितः सुरैः ॥
वज्रज्वालान्तरमयः शाल्मलश्चान्तरालकृत् ।
तस्यापरेण रजतो महानस्तो गिरिः स्मृतः ॥
सैव सोमक इत्युक्तो देवैर्यत्रामृतं पुरा ।
सम्भृतञ्च हृतञ्चैव मातुरर्थे गरुत्मता ॥
तस्यापरे चाम्बिकेयः सुमनाश्चैव स स्मृतः ।
हिरण्याक्षो वराहेण तस्मिन् शैले निसूदितः ॥
आम्बिकेयात् परो रम्यः सर्वौषधिसमन्वितः ।
विभ्राजस्तु समाख्यातः स्फाटिकः स महागिरिः ॥
यस्माद्विभाजते नित्यं विभ्राजस्तेन स स्मृतः ।
सैवेह केशवेत्युक्तो यतो वायुः प्रवायति ॥
तेषां वर्षाणि वक्ष्यामि पर्वतानां द्विजोत्तमाः ।
शृणुध्वं नामतस्तानि यथावदनुपूर्वशः ॥
द्विनामान्येव वर्षाणि यथैव गिरयस्तथा ।
उदयस्योदयं वर्षं जलधारेति विश्रुतम् ॥
नाम्ना सान्तभयन्नाम वर्षं तत् प्रथमं स्मृतम् ।
द्वितीये जलधारस्य सुकुमारमिति स्मृतम् ॥
तदेव शैशिरं नाम वर्षं संपरिकीर्त्तितम् ॥
रैवतस्य तु कौमारं तथैव च सुखोदयम् ।
श्यामपर्वतवर्षन्तु मणीचकमिति स्मृतम् ।
आनन्दकमिति प्रोक्तं तदेव मुनिभिः शुभम् ।

सोमकस्य शुभं वर्षं विज्ञेयं कुसुमोत्तरम् ॥
तदेव शिवमित्युक्तं वर्षं सोमकसंज्ञितम् ।
आम्बिकेयस्य मेदाकिं क्षेमकञ्चैव तत् स्मृतम् ॥
सेतुपर्वतकस्यापि महाद्रुममितिस्मृतम् ।
तदेव ध्रुवमित्युक्तं वर्षं विभ्राजसंज्ञितम् ॥
द्वीपस्य परिणाहञ्च ह्रस्वदीर्घत्वमेव च ।
जम्बुद्वीपेन संख्यातस्तस्य मध्ये वनस्पतिः ॥
शाको नाम महावृक्षस्तस्य प्रजा महानुगाः ।
एतेषु देवगन्धर्व्वाः सिद्धाश्च सह चारणैः ॥
विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह ।
तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ॥
तेषु नद्यस्तु वै सप्त प्रतिवर्षं समुद्रगाः ।
द्विनाम्न्यश्चैव ताः सर्वा गङ्गाः सप्तविधाःस्मृताः॥
प्रथमा सुकुमारीति गङ्गा शिवजला शुभा ।
अनुतप्ता च नाम्नैषा नदी संपरिकीर्त्तिता ॥
सुकुमारी तपःसिद्धा द्वितीया नामतः मती ।
नन्दा च पावनी चैव तृतीया परिकीर्त्तिता ॥
शिवलोका चतुर्थी स्यात् त्रिविधा च पुनः ।
स्मृता ।
इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः कमू ॥
धेनुका च स्मृता चैव षष्ठी संपरिकीर्त्तिता ।
सुकृता च गभस्ती च सप्तमी परिकीर्त्तिता ॥
एताः सप्त महाभागा प्रतिवर्षं शिवोदकाः ।
पावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् ॥
अभिगच्छन्ति ताश्चान्या नदीर्नद्यः सरांसि च ।
बहूदकपरिस्रावा यतो वर्षति वासवः ॥
आसान्तु नामधेयानि परिमाणं तथैव च ।
न शक्यं परिसंख्यातुं पुण्यास्ताः सरिदुत्तमाः ॥
ताः पिबन्ति महाहृष्टा नदीर्जनपदास्तु ते ।
ये ते शान्तभया प्रोक्ताः प्रमोदाश्चेति वै
शिवाः ॥
आनन्दाश्च सुखाश्चैव क्षेमकैश्च ध्रुवैः सह ।
वर्णाश्रमाचारयुक्ता देशास्ते सप्त विश्रुताः ॥
अरोगा बलिनश्चैव सर्व्वे मरणवर्ज्जिताः ।
अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी पुनः ॥
न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित् ।
त्रेतायुगसमः कालस्तथा तत्र प्रवर्त्तते ॥
शाकद्वीपादिषु ज्ञेयं पञ्चस्वेतेषु सर्व्वशः ।
देशस्य तु विचारेण कालः स्वाभाविकः स्मृतः॥
न तेषु सङ्करः कश्चिद्वर्णाश्रमकृतः क्वचित् ।
धर्म्मस्याव्यभिचारेण एकान्तसुखिताः प्रजाः ॥
न तेषु माया लोभो वा ईर्ष्यासूया भयं तथा ।
विपर्य्ययो न तेष्वस्ति तद्वै स्वाभाविकं स्मृतम् ॥
कालो न चैव तेष्वस्ति न दण्डो न च दाण्डिकः ।
स्वधर्म्मेण च धर्म्मज्ञास्ते रक्षन्ति परस्परम् ॥"
इति मात्स्ये १०२ अध्यायः ॥ *॥
अपि च । एवं परस्तात् क्षीरोदात् परित
उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनयामः
समानेन दधिमण्डोदेन परीतः । यस्मिन् हि
शाको नाम महीरुहः स्वक्षेत्रव्यपदेशकः ।
यस्य हि महासुरभिगन्धस्तद्द्वीपमनुवासयति ।
तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः ।
सोऽपि विभज्य सप्तवर्षाणि पुत्त्रनामानि तेषु
स्वात्मजान् पुरोजवमनोजववेपमानधूम्रानीक-
चित्ररेफबहुरूपविश्वाधारसंज्ञान् निधाप्याधि-
पतीन् स्वयं भगवत्यनन्त आवेशितमतिस्तपोवनं
प्रविवेश । एतेषां वर्षमर्य्यादा गिरयो नद्यश्च
सप्त सप्तैव । ईशान उरुशृङ्गो बलभद्रः शत-
केशरः सहस्रस्रोता देवपालो महानस इति ।
अनघा आयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी
सहस्रस्रुतिर्निजधृतिरिति । तद्वर्षपुरुषा ऋत-
व्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं
वाय्वात्मकं प्राणायामविधूतरजस्तमसः परम-
समाधिना यजन्ते । इति श्रीभागवते ५स्कन्धे २०
अध्यायः ॥ * ॥ युधिष्ठिरविक्रमादित्यशालि-
वाहनादिशकनरपतीनामतीताब्दः । तस्य
प्रमाणं दिनपञ्जिकायां द्रष्टव्यम् ॥ ( शक्तिः ।
कर्म्म । यथा, ऋग्वेदे । ६ । २४ । ४ ।
"शचीवतस्ते पुरुशाक शाका
गवामिव स्रुतयः सञ्चरणीः ॥"
"हे पुरुशाक बहुकर्म्मन्निन्द्र शचीवतः प्रज्ञा-
वतस्ते त्वदीयाः शाकाः शक्तयः कर्म्माणि वा ।"
इति तद्भाष्ये सायणः ॥ * ॥ समर्थे, त्रि । यथा,
ऋग्वेदे । ५ । ३० । १० ।
"सन्ता इन्द्रो असृजदस्य शाकै-
र्यदी सोमासः सुषुता अमन्दन् ॥"
"शाकैः शक्तैर्म्मरुद्भिः सह ।" इति तद्भाष्ये
सायणः ॥ )
शाकचुक्रिका, स्त्री, चिञ्चा । इति राजनिर्घण्टः ।
शाकटं, त्रि, ( शकट + अण् । ) शकटस्येदम् ।
शकटवोढ़ा । इति मेदिनी ॥
शाकटः, पुं, श्लेष्मान्तकवृक्षः । इति राजनिर्घण्टः॥
( शकटं वहतीति । शकट + "शकटादण् ।"
४ । ४ । ८० । इत्यण् । ) युगादिवोढ़ा । तत्-
पर्य्यायः । युग्यः २ प्रासङ्ग्यः ३ । इत्यमरः ॥
शाकटाख्यः, पुं, ( शाकट इति आख्या यस्य ।)
धववृक्षः । इति रत्नमाला ॥
शाकटायनः, पुं, (शकटस्यापत्यं पुमान् । शकट +
"नड़ादिभ्यः फक् ।" ४।१।९९। इति फक् ।) अष्ट-
शाब्दिकान्तर्गतशाब्दिकविशेषः । यथा,—
"इन्द्रश्चन्द्रः काशकृत्स्ना पिशली शाकटा-
यनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥"
इति कविकल्पद्रुमः ॥
( अयन्तु नाममात्रं धातुनिष्पन्नमाह । यथा,
कातन्त्रे कृत्सु उणादयो भूतेऽपि इत्यत्र
त्रिलोचनः ।
"नाम च धातुजमाह निरुक्ते
व्याकरणे शकटस्य च तोकः ।
यन्न पदार्थविशेषसमुत्थं
प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥")
शाकटिकः, त्रि, शकटगामी । शकटेन गच्छती-
त्यर्थे ठक्प्रत्ययेन निष्पन्नमेतत् । इति सिद्धान्त
कौमुदी ॥ ( यथा, बृहत्संहितायाम् । १०।४।
"रोहिण्यां कोशलमद्र-
काशिपाञ्चालशाकटिकाः ॥")
शाकटीनः, पुं, विंशतितुलापरिमाणम् । तत्-
पर्य्यायः । भारः २ आचितः ३ शाकटः ४
शलाटः ५ । इति हेमचन्द्रः ॥
शाकतरुः, पुं, ( शाकाख्यस्तरुः । ) शाकवृक्षः ।
इति शब्दमाला ॥ सागोन इति हिन्दी भाषा॥
शाकपत्रः, पुं, शिग्रुः । इति राजनिर्घण्टः ॥
शाकवालेयः, पुं, ब्रह्मयष्टिः । इति शब्दरत्नावली ॥
शाकम्भरी, स्त्री, ( शाकेन बिभर्त्ति । भृ + खश्
ङीष् ।) दुर्गा । यथा,—
'ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः ।
भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ॥
शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि ।
तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ॥"
इति मार्कण्डेयपुराणे नारायणीस्तुतिः ॥
अपि च ।
"भूयः सुरास्तिष्ययुगे निराशना-
न्निरीक्ष्य मारीचगृहे समाश्रिता ।
लोकान् भरिष्यामि तनूजशाकै-
स्तदा भविष्यामि शाकम्भरीति ॥"
इति वामने ५३ अध्यायः ॥
नगरविशेषः । शाम्भरीति ख्यातः । इति केचित्॥
शाकम्भरीयं, क्ली, आजमेराख्यदेशान्तर्गतशाम्भर-
नगरीयजलाशयविशेषोद्भवलवणम् । शाम्भरि
इति ख्यातम् । तत्पर्य्यायगुणा यथा,—
"शाकम्भरीयं कथितं गड़ाख्यं रोमकं तथा ।
गड़ाख्यं लघु वातघ्नमत्युष्णं भेदि पित्तलम् ।
तीक्ष्णं व्यवायि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि
च ॥"
इति भावप्रकाशः ॥
शाकयोग्यः, पुं, (शाकस्य योग्यः ।) धान्यकम् ।
इति राजनिर्घण्टः ॥
शाकराजः, पुं, ( शाकानां राजा निर्दोषत्वात् ।
"राजाहःसखिभ्यष्टच् ।" ५।४।९१। इति टच् ।)
वास्तूकम् । इति राजनिर्घण्टः ॥
शाकलः, } पुं, शाकलेन प्रोक्तमधीयते शाक-
शाकलकः, } लास्तेषां सङ्घोऽङ्को घोषो वा ।
"शाकलाद्वा ।" ४ । ३ । १२८ । इति अण् ।
परम्परासम्बन्धोऽङ्कः । इति सिद्धान्तकौमुदी
( द्वीपविशेषः । यथा, महाभारते । २।२६।६ ।
"शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः ।
अर्ज्जुनस्य च सैन्यैस्तैर्विग्रहस्तुमुलोऽभवत् ॥")
शाकलिकः, त्रि, शाकलसम्बन्धी । ("शकलकर्द्द-
माभ्यामुपसंख्यानम् ।" ४ । २ । २ । इत्यस्य
वार्त्तिकोक्त्या शाकलिकः कार्द्दमिकः । आभ्या-
मणपीति वृत्तिकारः ।) शाकलः । कार्द्दमः ।
इति सिद्धान्तकौमुदी ॥
शाकविल्वः, पुं, ( शाके विल्व इव । ) वार्त्ताकुः
इति जटाधरः ॥
शाकविल्वकः, पुं, ( शाकविल्व + स्वार्थे कन् ।)
वार्त्ताकुः । इति त्रिकाण्डशेषः ॥

शाकवीरः, पुं, (शाकेषु वीरः ।) वास्तूकशाकः । इति त्रिकाण्डशेषः ॥ जीवशाकः । इति राजनिर्घण्टः ॥

शाकवृक्षः, पुं, (शाकाख्यो वृक्षः ।) तरुविशेषः । इति रत्नमाला ॥ सेगोन इति भाषा । अस्य पर्य्यायगुणौ शाकशब्दे द्रष्टव्यौ ॥

शाकशाकटं, क्ली, ( शाकानां भवनं क्षेत्रम् । शाक + "भवने क्षेत्रे शाकटशाकिनौ ।" इति शाकटः ।) शाकक्षेत्रम् । इति हेमचन्द्रः ॥

शाकशाकिनं, क्ली, (शाकानां भवनं क्षेत्रम् । शाक + शाकिनः ।) शाकक्षेत्रम् । इति हेमचन्द्रः ॥

शाकश्रेष्ठः, पुं, (शाकेषु श्रेष्ठः ।) वास्तूकशाकम् । इति शब्दरत्नावली ॥

शाकश्रेष्ठा, स्त्री, (शाकेषु श्रेष्ठा ।) जीवन्ती । डोड़ीक्षुपः । वार्त्ताकुः । इति राजनिर्घण्टः ॥

शाका, स्त्री, हरीतकी । इति केचित् ॥

शाकाख्यं, क्ली, ( शाक इति आख्या यस्य । ) पत्रपुष्पादि । इत्यमरः ॥

"व्यञ्जनयोग्यं पत्रपुष्पादि शाकपदवाच्यम् ।
आदिना फलमूलादिग्रहः । यदुक्तम् ।
"मूलपत्रकरीराग्रफलकाण्डाधिरूढ़कम् ।
त्वक् पुष्पं करकञ्चैव शाकं दशविधं स्मृतम् ॥"
तत्र मूलं मूलकादेः । पत्रं पटोलादेः । करीरं वंशाङ्कुरादि । अग्रं वेत्रादेः । फलं कुष्माण्डादेः काण्डं उत्पलादिनाड़ी । अधिरूढ़ं तालास्थिमज्जा । अधिरूढ़ोऽङ्कुर इति केचित् । त्वक् मातुलुङ्गादेः । पुष्पं कोविदारादेः । करक छत्रिका । शक्यते भोक्तुमनेनेति शाकम् । श्यति सामर्थ्यं तनूकरोति शो तनूकरणे बाहुल्यात् कः शाकमित्यन्ये ।" इति तट्टीकायां भरतः ॥

शाकाख्यः, पुं, (शाक इति आख्या यस्य ।) शाकवृक्षः । इति रत्नमाला ॥ अस्य पर्य्यायगुणौ शाकशब्दे द्रष्टव्यौ ॥

शाकाङ्गं, क्ली, (शाकस्य अङ्गमिव । ) मरिचम् । इति राजनिघण्टः ॥

शाकाम्लं, क्ली, (शाके अम्लो यस्य ।) वृक्षाम्लम् । इति राजनिर्घण्टः ॥

शाकाम्लभेदनं, क्ली, (शाकाम्लं भेदनञ्च ।) चुक्रम् । इति राजनिर्घण्टः ॥

शाकालावुः स्त्री, राजालावुः । इति राजनिघण्टः ॥

शाकाष्टका, स्त्री, ( शाका अष्टौ प्रदेया यत्र ।) शाकोपकरणकश्राद्धार्हाष्टमी । सा च गौणफाल्गुनकृष्णाष्टमी । तद्विवरणं मांसाष्टकाशब्दे द्रष्टव्यम् ॥

शाकिनी, स्त्री, शाकोऽस्त्यत्रेति । शाक + इनिः । शाकयुक्ता भूमिः । यथा,—
"शकटः शाकिनी गावो जालमस्यन्दनं वनम् ।
अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥"
शकटो धान्यादिवहनद्वारेणोपजीव्यः ।
"पत्रं पुष्पं फलं कन्दं नालं संस्वेदजं तथा ।
शाकं षड़्विधमुद्दिष्टं गुरु विद्यात् यथोत्तरम् ॥"
इति वैद्योक्तशाकयोगात् शाकिनीगृहवाटिकाशाकाद्याहरणेन । गावो दुग्धादिना । जालं मत्स्याद्याहरणेन । अस्यन्दनं स्वस्थानादत्यागः ऋणादिलाभेन । व्ययाधिक्यनिवृत्त्या च । वनं फलपुष्पाद्याहरणेन । अनूपं बहूदकदेशः समृणालशालूकाद्याहरणेन । पर्वतो गैरिकमृदाद्याहरणेन । राजा भैक्षादिना । इत्याह्निकतत्त्वम् ॥*॥ दुर्गाया अनुचरीविशेषः । यथा,—
"डाकिनी योगिनी चैव खेचरी शाकिनी तथा
दिक्षु पूज्या इमा देव्यः सुसिद्धाः फलदायिकाः ॥"
इति कात्यायनीकल्पः ॥
"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
ततः परशिवो देवि षट्शिवाः परिकीर्त्तिताः ॥
मूलाधारे तु ब्रह्माणं डाकिनीसहितं न्यसेत् ।
सर्व्वत्र त्र्यक्षरीमुक्ता वादिसान्तं सबिन्दुकम् ॥
स्वाधिष्ठानाख्यचक्रे तु सविष्णुं राकिणीं तथा ।
वादिलान्तं प्रविन्यस्य नाभौ तु मणिपूरके ॥
डादिफान्तार्णसहितं रुद्रञ्च लाकिनीं तथा ।
अनाहते कादिटान्तं ईश्वरं काकिनीं तथा ॥
विशुद्धाख्ये महाचक्रे षोड़शस्वरसंयुतम् ।
सदाशिवं शाकिनीन्तु विन्यसेत् पूर्ववत्ततः ॥
आज्ञाचक्रे तु देवेशि ह-क्ष-वर्णसमन्वितम् ।
परं शिवं ब्रह्मरूपं हाकिनीसहितं न्यसेत् ॥"
इति ताराख्यासभेदः । इति तन्त्रसारः ॥

शाकुणः, त्रि, परोत्तापी । इति शब्दमाला ॥

शाकुनः, पुं, (शकुनमधिकृत्य कृतो ग्रन्थः । शकुन + अण् ।) पशुपक्ष्यादिरूपशकुनद्वारा मनुष्यशुभाशुभनिश्चायकग्रन्थः । तस्येमौ श्लोकौ ।
"शुभाशुभज्ञानविनिर्णयाय
हेतुर्नृणां यः शकुनः स उक्तः ।
गतिः स्वरालोकनभावचेष्टां
संकीर्त्तयामो द्विपदादिकानाम् ॥
लोकोऽमुना शाकुनसंज्ञकेन
ज्ञानेन विज्ञातसमस्तकार्य्यः ।
नापायकूपे पतति प्रसर्पन्
शास्त्रं हि दिव्या दृगतीन्द्रियेषु ॥"
इति वसन्तराजशाकुने १ सर्गः ॥
(शकुनस्यायमिति । शकुन + "तस्येदम् ।" ४ । ३ । १२० । इति अण् । पक्षिसम्बन्धी । यथा, मनुः । ३ । २६८ ।
"द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥")

शाकुनिकः, पुं, (शाकुनान् हन्तीति । शकुन + "पक्षिमत्स्यमृगान् हन्ति ।" ४ । ४ । ३५ । इति ठक् । ) पक्षिहन्ता । पाखिमारा इति चिड़िमार इति च भाषा । तत्पर्य्यायः । जीवान्तकः २ । इत्यमरः ॥ ( यथा, मनुः । ८ । २६० ।
"व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान् ॥" )

शाकुनेयः, पुं, (शकुनेरपत्यम् । शकुनि + "शुभ्रादिभ्यश्च ।" ४ । १ । १२३ । इति ढक् ।) डुण्डुलपक्षी । इति राजनिर्घण्टः ॥ शकुनीपुत्त्रो वृकासुरः । यथा भागवते । १० । ८८ । २९ ।
"शाकुनेय भवान् व्यक्तं श्रान्तः किं दूरमागतः ।
क्षणं विश्राम्यतां पुंस आत्मायं सर्व्वकामधुक् ॥"
शकुनसम्बन्धिनि, त्रि ॥

शाकुन्तलेयः, पुं, ( शकुन्तलाया अपत्यमिति । शकुन्तला + "स्त्रीभ्यो ढक् ।" ४ । १ । १२० । इति ढक् । ) भरतराजः । इति जटाधरः ॥ शकुन्तलासम्बन्धिनि, त्रि ॥

शाकुलिकः, त्रि, शकुलान् हन्ति यः । शकुलशब्दात् "पक्षिमांसमृगान् हन्ति ।" ४ । ४ । ३५ । इति ठक्प्रत्ययेन निष्पन्नमेतत् । इति सिद्धान्तकौमुदी ॥

शाक्करः, पुं, ( शक्कर एव । स्वार्थे अण् । ) अनड्वान् । इति हेमचन्द्रः ॥

शाक्तः, त्रि, शक्तिर्देवता अस्य । (शक्ति + "सास्य देवता ।" ४।२।२४ । इत्यण् । ) शक्त्युपासकः । अस्य प्रशंसा यथा,—
"स्वर्गे मर्त्ये च पाताले नास्ति शाक्तात् परः प्रियः ।
सौराणां गाणपत्यानां वैष्णवानां तथैव च ॥
तदन्ते चैव शाक्ताः स्युः क्रमशः क्रमशः प्रिये ।
शृणु देवि वरारोहे नास्ति शाक्तात् परो जनः ॥
शाक्तोऽपि शङ्करः साक्षात् परं ब्रह्मस्वरूपभाक् ।
आराधिता येन काली तारा त्रिभुवनेश्वरी ॥
षोड़शी चैव मातङ्गी छिन्ना च वगलामुखी ।
आराधिता महेशानि स शिवो नात्र संशयः ॥
अतिगोप्यं महेशानि शाक्तानां परमं पदम् ।
यो जानाति महीमध्ये स शिवो नात्र संशयः ॥
ब्रह्माद्यर्च्चितपादाब्जं यो भजेत् सततं मुदा ।
स यात्यचिरकालेन मुक्तिमन्दिरमेव हि ॥
पार्व्वतीचरणद्वन्द्वभजनाकिङ्करो भवेत् ।
स्वर्गभोगश्च मोक्षश्च शाक्तानां न भवेत् किमु ॥
शाक्तानाञ्चैव निन्दां ये कुर्व्वन्ति हि नराधमाः ।
तेषां लोहितपानं वै कुर्वन्ति भैरवीगणाः ॥
भैरवाश्चैव भैरव्यः सदा हिंसन्ति पामरान् ।
शाक्तान् हिंसन्ति गर्जन्ति निन्दन्ति बहुजल्पकाः ॥
छिनत्ति तेषां देवेशि शिरांसि हरवल्लभा ।
शाक्तेभ्य उत्तमो नास्ति स्वर्गे मर्त्ये रसातले ॥
शाक्तस्तु शङ्करो ज्ञेयस्त्रिनेत्रश्चन्द्रशेखरः ।
स्वयं गङ्गाधरो भूत्वा विहरेत् क्षितिमण्डले ॥"
देवीं प्रति शिववाक्यम् ।
"मदंशाश्चैव ये भूतास्ते शैवा नात्र संशयः ।
त्वदंशाश्चैव शाक्ताश्च सत्यं वै गिरिनन्दिनि ।
बहुवर्षसहस्रान्ते शैवाः शक्तिपरायणाः ।
शाक्ता वै शङ्करा देवि यस्य कस्य कुलोद्भवाः ॥
चाण्डाला ब्राह्मणाः शूद्राः क्षत्रिया वैश्यसम्भवाः ।

एते शाक्ता जगद्धात्रि न मनुष्याः कदाचन ॥
पश्यन्ति मानुषान् लोके केवलं कर्म्मचक्षुषा ।
ब्राह्मणैः क्षत्त्रियैर्व्वैश्यैः शूद्रैरेव च जातिभिः ॥
वाममार्गप्रभावेण कर्त्तव्यं जपपूजनम् ।
ये शाक्ता ब्राह्मणा देवि क्षत्त्रिया ब्राह्मणाः
स्मृताः ॥
वैश्याश्च ब्राह्मणा देवि सर्व्वे शूद्राश्च ब्राह्मणाः ।
ब्राह्मणाः शङ्कराश्चण्डि त्रिनेत्राश्चन्द्रशेखराः ॥"
इति मुण्डमालातन्त्रे २।३।४।७ पटलाः ॥*॥
"शाक्ता एव द्विजाः सर्व्वे न शैवा न च
वैष्णवाः ।
उपासन्ते यतो देवीं गायत्त्रीं परमाक्षरीम् ॥"
इति निर्व्वाणतन्त्रे ३ पटलः ॥
शक्त्युपासनानन्तरमन्योपासननिषेधो यथा,—
"अस्याश्चाराधनं कृत्वा नान्यस्याराधनं चरेत् ।
अन्यस्य स्मरणाद्देवि योगिनीशापमाप्नुयात् ॥"
इति गन्धर्व्वतन्त्रे २ पटलः ॥*॥
तस्य आभ्यन्तरस्नानं यथा,—
"शाक्तमाभ्यन्तरस्नानमुक्तं श्रीपश्चिमीमते ।
स्नानप्रकारो द्विविधो बाह्याभ्यन्तरभेदतः ॥
आन्तरं स्नानमत्यन्तं रहस्यमपि सादरात् ।
कथयामि भयध्वस्त्यै चतुर्व्वर्गफलाप्तये ॥
सम्वित्तयमनुस्मृत्य चरणत्रयमध्यतः ।
स्रवस्कं सच्चिदानन्दप्रभावं भावगोचरम् ॥
विमुक्तिसाधनं पुंसां स्मरणादेव योगिनाम् ।
तेन प्लावितमात्मानं भावयेत् भयशान्तये ॥"
इति विश्वसारतन्त्रे २ पटलः ॥*॥
तस्य कुशविशेषो यथा,—
"तर्ज्जन्या रजतं धार्य्यं स्वर्णं धार्य्यमनामया ।
एष एव कुशः शाक्ते न दर्भो वनसम्भवः ॥"
इति श्यामारहस्यम् ॥
( शक्तिमान् । यथा, ऋग्वेदे । ७ । १०३ । ५ ।
"वाचं शाक्तस्येव वदति शिक्षमाणः ॥"
"शिक्षमाणः शिक्ष्यमाणः शिष्यः शाक्तस्येव शक्तिमतः शिक्षकस्य वाचं यथा अनुवदति तद्वत् ।" इति तद्भाष्ये सायणः ॥)

**शाक्तीकः**, पुं, ( शक्तिः प्रहरणमस्य । शक्ति + "शक्तियष्ट्योरीकक् ।" ४।४।५९ । इति ईकक् । शक्तिधारकः तत्पर्य्यायः । शाक्तिहेतिकः २ । इत्यमरः ॥

**शाक्त्यः**, त्रि, शक्त्युपासकः । इति शक्तिशब्दात् ष्यञ्प्रत्ययेन निष्पन्नमेतत् ॥

**शाक्यः**, पुं, (शकोऽभिधानमस्येति । शक + "शण्डिकादिभ्यो ञ्यः ।" ४।३।९२ । इति ञ्यः बुद्धः । इति हलायुधः ॥

**शाक्यमुनिः**, पुं, शाक्यवंशावतीर्णबुद्धमुनिविशेषः इत्यमरः ॥ अस्य सप्त पर्य्याया गोतमशब्दे द्रष्टव्याः । पर्य्यायान्तरं यथा । खजित् २ श्वेतकेतुः ३ धर्म्मकेतु ४ महामुनिः ५ पञ्चज्ञानः ६ सर्व्वदर्शी ७ महाबोधिः ८ महाबलः ९ बहुक्षमः १० त्रिमूर्त्तिः ११ सिद्धार्थः १२ शाकः १३ । इति शब्दरत्नावली ॥ शाक्यवंशत्वात् शाक्यः शाक्यश्चासौ मुनिश्चेति शाक्यमुनिः । तथा हि शाको वृक्षविशेषः तत्र भवा विद्यमानाः शाक्याः । पितुः शापेन केचिदिक्ष्वाकुवंश्या गौतमवंशजकपिलमुनेराश्रमे शाकवृक्षे कृतवासाश्च शाक्या उच्यन्ते । तदुक्तम् ।
"शाकवृक्षप्रतिच्छन्नं वासं यस्मात् प्रचक्रिरे ।
तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इतिश्रुताः ।"
इत्यमरटीकायां भरतः ॥

**शाक्यसिंहः**, पुं, ( शाक्यः सिंह इव । ) शाक्यमुनिः । इत्यमरः ॥

**शाक्री**, स्त्री, दुर्गा । यथा,—
"इन्द्राणी इन्द्रजननी शाक्री शक्रपराक्रमा ।
वज्राङ्कुशकरा देवी वज्रा तेनोपगीयते ॥"
इति देवीपुराणे देवीनिरुक्ताध्यायः ॥
शक्रपत्नी च ॥

**शाख, ऋ** व्याप्तौ । इति कविकल्पद्रुमः ॥(भ्वा०-पर०-सक०-सेट् । ) ऋ, अशशाखत् । इति दुर्गादासः ।

**शाखः**, पुं, कृत्तिकापुत्त्रः । यथा,—
"अवाप चानिलात् पुत्त्रमग्नितुल्यगुणं पुनः ।
अग्निपुत्त्रः कुमारस्तु शरस्तम्बे व्यजायत ॥
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ।
अपत्यं कृत्तिकानाञ्च कार्त्तिकेयस्ततः स्मृतः ॥"
इति मात्स्ये ५ अध्यायः ॥
चित्तिः । इति शब्दचन्द्रिका ॥

**शाखा**, स्त्री, (शाखति गगनं व्याप्नोतीति । शाख + अच् । टाप् । ) वृक्षाङ्गविशेषः । डाल इति भाषा । ( यथा, दुर्गापूजापद्धतौ ।
"शाखाच्छेदोद्भवं दुःखं न च कार्य्यं त्वया
प्रभो ! ॥")
तत्पर्य्यायः । लता २ । इत्यमरः ॥ लङ्का ३ । इति जटाधरः । शिखा ४ । इति भरतधृतमेदिनी ॥ पक्षान्तरम् । बाहुः । वेदभागः । इति मेदिनी ॥ (यथा, मनौ । ३ । १४५ ।
"यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम्॥")
ग्रन्थभेदः । इति धरणिः ॥ अन्तिकः । इति विश्वः ॥ ( प्रकारः । यथा, गीतायाम् ।२।४१।
"बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्॥")

**शाखाकण्टः**,पुं, (शाखायां कण्टो यस्य ।)स्नुहीवृक्षः । इति राजनिर्घण्टः ॥

**शाखानगरं**, क्ली, ( शाखेव नगरम् ।) मूलनगरादन्यत् पुरम् । इत्यमरः ॥ ( यथा, महाभारते । १२ । ८७ । ८ ।
"शाखानगरमर्हस्तु सहस्रपतिरुत्तमः ॥")
मूलनगरेऽसम्मितस्य जनौघस्य स्थानाय मूलनगरस्य समीपेऽङ्के वा यदन्यत् पुरं नगरान्तरं क्रियते तत् शाखानगरं मूलनगरस्य तरुस्थानीयस्य शाखेव । अभिष्यन्दि रमणमप्यत्र । स्यादभिष्यन्दि रमणं शाखानगरमित्यपि । इति त्रिकाण्डशेषः । इति तट्टीकायां भरतः ॥ अपि च । यथा, शब्दरत्नावल्याम् ।
"आरभ्य मूलनगरादपरं नगरं हि यत् ।
तदभिष्यन्दि रमणं शाखानगरमित्यपि ॥"

**शाखापित्तः**, पुं, पाणिपादांशमूलदाहः । इति राजनिर्घण्टः ॥

**शाखापुरं**, क्ली,(पुरस्य शाखा अभिधानात् पूर्वनिपातः । शाखेव पुरमिति वा ।) शाखानगरम् । तत्पर्य्यायः । उपपुरम् २ । इति हेमचन्द्रः

**शाखाम्ला**, स्त्री, ( शाखायामम्लो यस्याः । ) वृक्षाम्ला । इति राजनिर्घण्टः ॥

**शाखामृगः**, पुं, (शाखाया मृगः ।) वानरः । इत्यमरः ॥ ( यथा,—
"मुक्ताफलाय करिणं हरिणं पलाय
सिंहं निहन्ति भुजविक्रमसूचनाय ।
का नीतिरीतिरियती रघुवंशवीर !
शाखामृगे जरति यस्तव बाणमोक्षः ॥"
इत्युद्भटः ॥

**शाखारण्डः**, पुं, स्वशाखां परित्यज्य शाखान्तराध्ययनकर्त्ता । तत्पर्य्यायः । अन्यशाखकः २ । इति हेमचन्द्रः ॥

**शाखारथ्या**,स्त्री, षोड़शहस्तप्रस्थपथः । यथा,—
"धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ।
त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरक्षकाः ॥"
इति देवीपुराणे गोपुरद्वारलक्षणनामाध्यायः ॥

**शाखालः**, पुं, (शाखां लाति आश्रयतीति ।ला + कः ।) वानीरवृक्षः । इति राजनिर्घण्टः ॥

**शाखाशिफा**, स्त्री, ( शाखायाः शिफा ।) वटादीनां शाखासम्बन्धिशिफा । नाम्ना इति ख्याता । तरोर्मूलादारभ्य अग्रं यावत् गता लतागुडूच्यादिः । इति भरतः ॥ तत्पर्य्यायः । अवरोहः २ । इत्यमरः ॥

**शाखी**, [न्] पुं, ( शाखास्त्यस्येति । शाखा + इनिः ।) वृक्षः । इत्यमरः ॥ ( यथा,—
"सीताया हृदि यच्छिरीषकुसुमप्राये पफालीक्षकैः
पौलस्त्यस्य नितान्तकुण्ठकुलिशे वज्राधिके
वक्षसि ।
आपुङ्खं निममज्ज मन्मथशरस्तन्नैव जानीमहे
कः शाखी सखि ! यस्य पुष्पमभवत् पुष्पायुधस्यायुधम् ॥"
इत्युद्भटः ॥)
वेदः । तुरुष्काख्यजनः । इति मेदिनी ॥ राजभेदः । इति हेमचन्द्रः ॥

**शाखोटः**, पुं, वृक्षविशेषः । श्याओड़ा इति भाषा ॥ तत्पर्य्यायः । पिशाचद्रुः २ पीतफलः ३ कर्कशच्छदः ४ । इति त्रिकाण्डशेषः ॥ भूतवृक्षः ५ सकटः ६ अक्षधरः ७ । ति भूरिप्रयोगः ॥ गवाक्षी ८ घूकावासः ९ रूक्षपत्रः १० पीतः ११ कैशिकबीजः १२ क्षीरनाशनः १३ । अस्य गुणाः । तिक्तत्वम् । उष्णत्वम् । पित्तकारित्वम् । वातहारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"शाखोटः पीतफलको भूतावासः खरच्छदः ।

शाखोटो रक्तपित्तार्शोवातश्लेष्मातिसारजित् ॥”
इति भावप्रकाशः ॥

शाख्यः, त्रि, शाखासम्बन्धी । शाखाशब्दात् ष्णप्रत्ययेन निष्पन्नमेतत् ॥

शाङ्करं, क्ली, (शङ्कर+अण् ।) छन्दोभेदः । इति मेदिनी ॥ अस्य रूपान्तरं शाक्करं शार्करञ्च ॥ (शङ्करी देवतास्य इत्यर्थे अणि आर्द्रानक्षत्रम् । यथा, बृहत्संहितायाम् । ७१ । ७ ।
“भगे तु मूषकाद्भयं व्यसुत्वमेव शाङ्करे ॥”)

शाङ्करः, पुं, (शङ्करस्यायं वाहनत्वात् । शङ्कर+अण् । ) बलीवर्द्दः । इति मेदिनी ॥ (शङ्करसम्बन्धिनि, त्रि । यथा, कथासरित्सागरे । ४६ । २०१ ।
“तत्रैषां तद्गुहाद्वारप्राप्तानां शाङ्करा
गणाः ॥”)

शाङ्करिः, पुं, शङ्करस्यापत्यं पुमान् । शङ्कर+इञ् ।) कार्त्तिकेयः । गणेशः । इति मेदिनी ॥

शाङ्कुची, स्त्री, शङ्कोचनमत्स्यः । इति शब्दरत्नावली ॥

शाङ्खः, त्रि, शङ्खसम्बन्धि । शङ्खशब्दात् ष्णप्रत्ययेन निष्पन्नमेतत् ॥

शाङ्खिकः, पुं, (शङ्खकरणं शिल्पमस्य इति । शङ्ख+ठक् । ) जातिविशेषः । शाँखारि इति भाषा । तत्पर्य्यायः । काम्बविकः २ । इत्यमरः ॥ शङ्खकारः ३ काम्बजकः ४ । इति शब्दरत्नावली ॥ शङ्खवादकः । तत्पर्य्यायः । शङ्खध्मः २ । इति जटाधरः ॥

शाङ्कुष्ठा, स्त्री, गुञ्जा । इति रत्नमाला ॥

शाटः, पुं, वस्त्रभेदः । इत्यमरभरती ॥ यथा,—
“दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ॥”
इति चाणक्यशतकम् ॥

शाटकः, पुं क्ली, (शाट+स्वार्थे कन् । ) पटः । (यथा, कथासरित्सागरे । ५३ । ३८ ।
“स राजवन्दिनामा तद्दत्त्वा शाटकमग्रहीत् ॥”) नाटकभेदः । इत्यमरभरती ॥

शाटिका, स्त्री, शाटी । इत्यमरटीकायां भरतः ॥

शाटी, पुं स्त्री, वस्त्रभेदः । शाड़ी इति भाषा । इत्यमरः ॥ अस्या निर्माल्यत्वं निर्माल्यशब्दे द्रष्टव्यम् ॥

शाट्यायनं, क्ली, प्रकृतकर्म्मवैगुण्यप्रशमनार्थहोमः । यथा । यत्तु प्रकृतकर्म्मवैगुण्यप्रशमनाय शाट्यायनहोमाभिधानं भवदेवभट्टसम्मतं तन्न प्रामाणिकं तस्मादपि महाप्रामाणिकैर्भट्टनारायणचरणैर्गोभिलभाष्ये तदप्रमाणीकृतत्वात् । छन्दोगपरिशिष्टेऽपि प्रायश्चित्तार्थं प्रकारत्रयमात्रमुक्तम् । यथा,—
“यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेया स्त्रीपाणिग्रहणे यथा ॥
अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः
स्मृतः ॥”
त्रिर्विकल्प इत्यनेन कल्पान्तरनिषेधात् गोभिलीयकर्म्मणि शाट्यायनहोमो न युक्तः । किन्तु व्यस्तसमस्तमहाव्याहृतिभिश्चतसृभिः प्रायश्चित्तहोमो युक्तः । त्रिशारदप्रभृतयोऽप्येवम् । शाट्यायनहोमस्य समूलत्वेऽपि शाख्यन्तरीयत्वम् । इति तिथ्यादितत्त्वम् ॥

शाट्यायनः, पुं, मुनिविशेषः । इति पुराणम् ॥

शाठ्यं, क्ली, ( शठस्य भावः । शठ+ष्यञ् । ) शठता । (यथा । “शठे शाठ्यं समाचरेत् ॥”) तत्पर्य्यायः । कपटः २ व्याजः ३ दम्भः ४ उपधिः ५ छद्म ६ कैतवम् ७ कुसृतिः ८ निकृतिः ९ । इत्यमरः ॥ नव अयथार्थव्यवहारे । शठ वधे क्लेशकैतवे तालव्यादिः अल् तस्य कर्म्म शाठ्यं ष्यञ् । कपटादिषट्कं छद्मनि कुसृत्यादित्रयं चित्तकौटिल्ये इत्येके । कपटादिषट्कं वञ्चनमात्रफलम् । कुसृत्यादित्रिकन्तु हिंसाफलमिति भेदः । इति सर्व्वानन्दो मधुश्च । नवैवैकार्था इति बहवः । इति भरतः ॥ अपि च ।
“अस्त्रियां कपटो व्याज उपधिर्दम्भ एव च ।
कूटं कल्कं छलं छद्म मिषकैरवकैतवम् ॥
अथ शाठ्यञ्च शठता कुसृतिर्निकृतिश्च सा ।
हिंसाफले चतुष्कं स्यात् शाठ्यपर्य्याय ईरितः ॥
पूर्व्वः कपटपर्य्यायः फले वञ्चनमात्रके ।
उभयोरेकपर्य्याय इति केचित् प्रचक्षते ॥”
इति शब्दरत्नावली ॥

शाड, ऋ ङ श्लाघे । इति कविकल्पद्रुमः ॥(भ्वा० आत्म०-सक०-सेट् ।) ऋ, अशशाड़त् । ङ, शाड़ते गुणिनं गुणी । अन्तःस्थवतीययुक्तादिरयमिति कस्यचिद्भ्रमः । इति दुर्गादासः ॥

शाड्वलः, पुं, शाद्वलः । इति केचित् ॥

शाणं, क्ली, (शणेन निर्म्मितमिति । शण+अण् ।) शणनिर्म्मितवस्त्रम् । यथा । क्षौमं शाणं वा ब्राह्मणस्य कार्पासं क्षत्त्रियस्य आविकं वैश्यस्य । क्षुमा अतसी तस्या इदं क्षौमं तसरादि । शाणं शणतन्तुभवं तदुभयं ब्राह्मणस्य । इति संस्कारतत्त्वम् ॥

शाणः, पुं, ( शण्यते ज्ञायते गुणादिरनेनेति । शण+घञ् ।) कषपट्टिका । कष्टिपातर इति भाषा । तत्पर्य्यायः । निकषः २ कषः ३ । इत्यमरः ॥ शानः ४ निकसः ५ कसः ६ । इति भरतः ॥ आकषः ७ । इति शब्दरत्नावली ॥ माषचतुष्टयम् । चारि माषा इति भाषा ॥ तत्पर्य्यायः । निष्कः २ टङ्कः ३ । इति वैद्यकपरिभाषा । यथा,—
“माषैश्चतुर्भिः शाणः स्यात् धरणः स निगद्यते ।
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ॥”
इति भावप्रकाशः ॥
लौहादीनां निकषः । शानपातरः इति भाषा । इति मेदिनी ॥ करपत्रम् । करात् इति भाषा । इति विश्वः ॥

शाणाजीवः, पुं, (शाणेन आजीवतीति । आ+जीव+अच् ।) अस्त्रमार्जकः । यथा,—
“शाणाजीवः शस्त्रमार्जो भ्रमासक्तोऽसिधावकः ॥”
इति हेमचन्द्रः ॥

शाणिः, पुं, पट्टवृक्षः । यथा,—
“पट्टे राजशणः शाणिश्चिमिः कक्खटपत्रकः ॥”
इति शब्दमाला ॥

शाणितः, त्रि, तीक्ष्णीकृतः । निशितः । कृतशाणः शाणशब्दादितप्रत्ययेन निष्पन्नमेतत् ॥

शाणी, स्त्री, (शणस्य विकारः । शण+अण् । टिड्ढेति ङीप् । ) शणसूत्रमयी पट्टिका । यथा,—
“शाणीप्रायाणि वस्त्राणि शमीप्राया महीरुहाः ।
शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे ॥”
इति विष्णुपुराणे ६ अंशे १ अध्यायः ॥
शाणी शणसूत्रमयी पट्टिका तत्तुल्यानि वस्त्राणि । इति तट्टीका ॥ (यथा, महाभारते । ३ । १९४ । १९ ।
“वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकः ॥”)
प्रावरणान्तरम् । ताम्बु इति भाषा । इति मेदिनी ॥ छिद्रवस्त्रम् । यथा । शाणी गोणी छिद्रवस्त्रे । इति हेमचन्द्रः ॥ हस्तकटाक्षादिसूचना । इशारा इति पारस्यभाषा । इति शब्दरत्नावली ॥

शाणीरं, क्ली, शोणनदमध्यस्थतटः । दर्दरीनदीतटः । इति विश्वः ॥

शाण्डिल्यः, पुं, विल्ववृक्षः । इत्यमरः ॥ (यथा, महागणपतिस्तोत्रे । ९ ।
“हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया
बिभ्रत्याम्बुरुहे समं मधुरिपुस्ते शङ्खचक्रे वहन् ॥”)
वह्निभेदः । (शण्डिलस्य मुनेर्गोत्रापत्यमिति । शण्डिल+“गर्गादिभ्यो यञ् ।” ४ । १ । १०५ । इति यञ् । ) मुनिविशेषः । इति मेदिनी ॥ स तु गोत्रकारः भक्तिसूत्रकारश्च । तत्सूत्रभाष्याद्यश्लोको यथा,—
“प्रपद्य परमं देवं श्रीस्वप्नेश्वरसूरिणा ।
शाण्डिल्यशतसूत्रीयं भाष्यमाभाष्यतेऽधुना ॥”

शातं, क्ली, ( शो+क्तः “शाच्छोरन्यतरस्याम् ।” ७ । ४ । ४१ । इति पक्षे इत्वाभावः ।) सुखम् । तद्वति, त्रि । इत्यमरः ॥ (विनाशः । यथा, सुश्रुते । ४ । १ ।
“पाणिप्राप्तं पाणिदाहं नखशातं करोति च ॥”)

शातः त्रि, ( शो+क्तः दुर्बलः । ) निशितः । इति मेदिनी ॥ धुस्तूरः इत्यमरः ॥

शातकुम्भं, क्ली, ( शातकुम्भे पर्व्वते भवम् । शातकुम्भ+अण् । ) काञ्चनम् । ( यथा, माघे । ९ । ९ ।

"द्रुतशातकुम्भनिभमंशुमतो
वपुरर्द्धमग्नवपुषः पयसि ॥")
धुस्तूरः । इत्यमरः ॥
शातकुम्भः पुं, करवीरवृक्षः । इति मेदिनी ॥
शातकौम्भं, क्ली, स्वर्णम् । इति भरतद्विरूपकोषः ॥
(सुवर्णनिर्म्मिते, त्रि । यथा, रामायणे । २ । ३ । ११ ।
"शतञ्च शातकौम्भानां कुम्भानामग्निवर्च्चसाम् ॥")
शातनं, क्ली, कार्श्यम् । विनाशनम् । यथा,—
"वसन्ते सर्व्वशस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥"
इति सारमञ्जरी ॥
(छेदके, त्रि । यथा, रघुः । ३ । ४२ ।
"स पूर्व्वतः पर्व्वतपक्षशातनं
ददर्श देवं नरदेवसम्भवः ॥")
शातपत्रकः, पुं, ( शातपत्रं पद्ममिव । कन् । ) चन्द्रप्रकाशः । यथा,—
"चन्द्रिका कौमुदी ज्योत्स्ना प्रकाशो द्योत आतपः ।
अकल्का चन्द्रिकायाञ्च प्रकाशे शातपत्रकः ॥"
इति शब्दचन्द्रिका ॥
शातभीरुः, पुं, मदनमाली । मल्लिकाभेदः । यथा,—
"शातभीरुर्भद्रवल्ली भूमिमण्डोऽष्टपादिका ॥"
इति रत्नमाला ॥
शातमानं, त्रि, ( शतमान + "शतमानविंशतिकेति ।" ५ । १ । २७ । इति अण् । ) शतमानेन क्रीतम् । इति सिद्धान्तकौमुदी ॥
शातला, स्त्री, (शातं छेदं लातीति ला + कः ।) सातला । चर्म्मकषा इति ख्याता । इत्यमरटीकायां भरतः ॥
शात्रवं क्ली, ( शत्रोर्भावः समूहो वा । शत्रु + अण् । ) शत्रुभावः । शत्रुसंहतिः । इति मेदिनी ॥ (शत्रुसम्बन्धिनि, त्रि । यथा, रघुः । ४ । ४२ ।
"ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवञ्च पपुर्यशः ॥")
शात्रवः पुं, ( शत्रुरेव । स्वार्थे अण् । ) शत्रुः । इत्यमरः ॥ (यथा, माघे । १४ । ४४ ।
"तत्र नाभवदसौ महाहवे
शात्रवादिव पराङ्मुखोऽर्थिनः ॥")
शादः, पुं, (शो तनूकरणे + "शशपिभ्यां ददनौ ।" उणा० ४ । ९७ । इति दः ।) कर्द्दमः । शष्पम् । इत्यमरः ॥
शादहरितः, त्रि, ( शादैः शष्पैः हरितः । ) शाद्वलः । इत्यमरः ॥
शाद्वलः, त्रि, शाद + "नडशादात् ड्वलच् ।" ४ । २ । ८८ । इति ड्वलच् । ) नवतृणबहुलदेशः । इत्यमरः ॥ शादो नवतृणं विद्यतेऽत्र शाद्वलः । शष्पवाचिन एव शादशब्दाद्वलः स्यात् न तु पङ्कवाचिनोऽनभिधानात् । इति तट्टीकायां भरतः ॥ (यथा, रामायणे । २ । ३० । १४ ।
"शाद्वलेषु यदा शिश्ये वनान्ते वनगोचरा ।
कुथास्तरणयुक्तेषु किं स्यात् सुखतरं ततः ॥")
शान, ज तेजे । इति कविकल्पद्रुमः ॥ ( भ्वा०-उभ०-सक०-सेट् । ) शानस्तिक्ष्णीकरणम् । ज, शीशांसति शीशांसते खड्गं कर्म्मकारः । इति दुर्गादासः ॥
शानः, पुं, शाणः । इत्यमरटीकायां भरतः ॥
शा(ण)नपादः, पुं, पारिपात्रपर्व्वतः । ( अस्य विवरणं हरिवंशे १३१ अध्याये द्रष्टव्यम् ॥ ) चन्दनघर्षणपाषाणः । इति महाभारते हरिवंशः ॥ चन्दनपिढ़ि इति भाषा ॥
शानी, स्त्री, इन्द्रवारुणी । इति शब्दचन्द्रिका ॥
शान्तः, त्रि, (शम + क्तः । "वा दान्तशान्तेति ।" ७ । २ । २७ । इति निपातितः । ) उपशमं प्रापितः । प्राप्तोपशमः । इति भरतः ॥ तत्पर्य्यायः । शमितः २ । इत्यमरः ॥ श्रान्तः ३ जितेन्द्रियः ४ । इति हेमचन्द्रः ॥ शमान्वितः ५ । इति मेदिनी ॥
शान्तः, पुं, अभियुक्तः । रसभेदः । इति मेदिनी ॥ शान्तरसस्य लक्षणादि यथा,—
"शान्तः समः स्थायिभाव उत्तमप्रकृतिर्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥
अनित्यत्वादिनाशेषवस्तुनिःसारता तु या ।
परमार्थस्वरूपं वा तस्यालम्बनमिष्यते ॥
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ॥
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ।
निर्व्वेदहर्षस्मरणमतिभूतदयादयः ॥"
यथा,—
"रथ्यान्तश्चरतस्तथा धृतजरत्कन्था नवस्थाध्वगैः
सत्रासञ्च सकौतुकञ्च सदयं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कं करटः कदा करपुटी भिक्षां विलुण्ठिष्यति ॥"
पुष्टिस्तु महाभारतादौ द्रष्टव्या ।
"निरहङ्काररूपत्वात् दयावीरादिरेष नो ।"
दयावीरादौ हि जीमूतवाहनादौ अन्तरा मलयवत्याद्यनुरागादिरन्ते च विद्याधरचक्रवर्त्तित्वाद्याप्तिर्दर्शनादहङ्कारोपशमो न दृश्यते । शान्तस्तु सर्व्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति । अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम् । ननु ।
"न यत्र दुःखं न सुखं न चिन्ता
न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः
सर्व्वेषु भावेषु समप्रमाणः ॥"
इत्येवं रूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् । तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वमित्युच्यते युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः रसतामेति तदस्मिन् सञ्चार्य्यादेः स्थितिश्च न विरुद्धा । यश्चास्मिन् सुखभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः । उक्तं हि ।
"यच्च कामसुखं लोके यच्च दिव्यं महासुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥
सर्व्वाकारमहङ्काररहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा ॥"
आदिशब्दात् धर्म्मवीरदानवीरदेवताविषयरतिप्रभृतयः । तत्र देवताविषया रतिर्यथा,—
"कदा वाराणस्यामिह सुरधुनी रोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्"
इति साहित्य दर्पणे ३ परिच्छेदः ॥
शान्तं, [म्] व्य वारणम् । इति मेदिनी ॥
शान्तनवः, पुं,(शान्तनोरपत्यं पुमान् । शान्तनु + अण् । ) शान्तनुराजपुत्रः । भीष्मः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । १ । ३६ । ८० ।
"तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः ।
वसुवीर्य्यात् समभवत् महावीर्य्यो महायशाः ॥")
शान्तनुः, पुं, द्वापरयुगस्य चन्द्रवंशीयैकविंशराजः । स तु गङ्गायां भीष्मं जनयामास । तस्य पिता प्रदीपः । यथा,—
"जयसेनस्तत्तनयो राधिकोऽतोऽयुतायुभूत् ।
ततश्चाक्रोधनस्तस्मात् देवातिथिरमुष्य च ।
ऋक्षस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चात्मजः ।
देवापिः शान्तनुस्तस्य वाह्लीक इति चात्मजाः ॥
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेष्यति ।
शान्तिमाप्नोति चैवाग्र्यां कर्म्मणा तेन शान्तनुः ॥
वाह्लीकात् सोमदत्तोऽभूत् भूरिर्भूरिश्रवास्ततः ।
शलश्च शान्तनोरासीत् गङ्गायां भीष्म आत्मवान् ॥"
इति श्रीभागवते ९ स्कन्धे २२ अध्यायः ॥
तत्पर्य्यायः । महाभीष्मः २ । इति जटाधरः ॥ प्रातीपः ३ इति त्रिकाण्डशेषः ॥ प्रतीपः ४ प्रतिपः ५ । इति शब्दरत्नावली ॥ ( शन्तनुरिति पाठस्तु बहुभिरादृतः ॥ ) कर्कटी । इति रत्नमाला ॥
शान्ता, स्त्री, दशरथराजकन्या । दशरथेन कन्यार्थं लोमपादाय राज्ञे प्रदत्ता । सा च ऋष्यशृङ्गभार्य्या । इति रामायणम् ॥ ( यथा, उत्तरचरिते १ अङ्के ।
"कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ ॥)
शमीभेदः । तत्पर्य्यायः । शुभा २ भद्रा ३ अपराजिता ४ जया ५ विजया ६ । अस्या गुणाः शमीवत् । इति राजनिर्घण्टः ॥
शान्तिः, स्त्री, (शम + क्तिन् । ) कामक्रोधादिप्रशमः । चित्तोपशमः । इति भरतः ॥ विषयेभ्य

इन्द्रियोपरमः। इति चण्डिटीकायां नागोजीभट्टः ॥ तत्पर्य्यायः । शमथः २ शमः ३ । इत्यमरः॥ प्रशमः ४ उपशमः ५ प्रशान्तिः ६ । इति शब्दरत्नावली ॥ तृष्णाक्षयः ७ । इति हेमचन्द्रः ॥ तल्लक्षणं यथा,—

'यत्किञ्चिद्वस्तु संप्राप्य स्वल्पं वा यदि वा बहु।
या तुष्टिर्जायते चित्ते शान्तिः सा गद्यते बुधैः॥"

इति पद्मपुराणे क्रियायोगसारे १५ अध्यायः ॥

भद्रम् । इति हेमचन्द्रः ॥ गोपीविशेषः । यथा,

राधिकोवाच ।

"शान्त्या गोप्या युतस्त्वञ्च दृष्टोऽहं रासमण्डले।
वसन्तपुष्पशय्यायां माल्यवान् चन्दनोक्षितः ॥
रत्नप्रदीपैर्युक्तश्च रत्ननिर्म्माणमन्दिरे ।
रत्नभूषितभूषाढ्यो रत्नभूषितया सह ॥
तया दत्तञ्च ताम्बूलं भुक्तवांश्च पुरा विभो ।
सद्यो मच्छब्दमात्रेण तिरोधानं कृतं तया ॥
शान्तिर्देहं परित्यज्य भयाद्दीना त्वयि प्रभो ।
ततस्तस्याः शरीरञ्च गुणश्रेष्ठं बभूव ह ॥
संविभज्य त्वया दत्तं प्रेम्णा प्ररुदता पुरा ।
विश्वे विषयिणे किञ्चित् सत्त्वरूपाय विष्णवे॥
शुद्धसत्त्वस्वरूपायै महालक्ष्म्यै पुरा विभो ।
त्वन्मन्त्रोपासकेभ्यश्च वैष्णवेभ्यश्च किञ्चन ।
तपस्विभ्यश्च धर्म्माय धर्म्मिष्ठेभ्यश्च किञ्चन ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ८ अध्यायः॥*॥

दुर्गा यथा,—

"उत्पत्तिस्थितिनाशेषु रजादित्रिगुणा सता ।
सर्व्वज्ञा सर्व्ववेत्तृत्वाच्छान्तित्वाच्छान्तिरुच्यते॥"

इति देवीपुराणे देवीनिरुक्ताध्यायः ॥*॥

धर्म्मद्वारा ग्रहदौःस्थ्यदुःस्वप्नादिसूचितैहिकानिष्टहेतुदुरितनिवृत्तिः । यथा,—

"यथा शस्त्रप्रहाराणां कवचं विनिवारकम् ।
तथा दैवोपघातानां शान्तिर्भवति वारणम् ॥"

बालग्रहभूतग्रहनराधिपप्रबलतरशत्रुदुःसहरोगाभिभवाद्भुतदुःस्वप्नग्रहदौःस्थ्यादिनिमित्तकं शान्तिकर्म्मापि मलमासे कर्त्तव्यम् । शुद्धकालप्रतीक्षायामसहत्वेनानन्यगतिकत्वात् । अत एवात्मानं सततं गोपायीत इति श्रुतौ सततमित्युक्तम् । इति मलमासतत्त्वम् ॥ * ॥ उपसर्गशान्तिगाथा यथा,—

"एषामिन्द्रो महावीर्य्यस्त्रैलोक्यस्येश्वरोऽभवत्।
शतं क्रतूनामाहृत्य सुशान्तिर्नाम नामतः ॥
तस्योपसर्गनाशाय नामाक्षरविभूषिता ।
अद्यापि मानवैर्गाथा गीयतेऽत्र महीतले ॥
सशान्तिर्देवराट् शान्तः सुशान्तिं न प्रयच्छति।
सहितः शिवसत्याद्यैस्तथैव वशवर्त्तिभिः ॥"

इति मार्कण्डेयपुराणे उत्तममन्वन्तरसमाप्ताध्यायः ॥*॥

अथाद्भुतशान्तिः । तत्राद्भुतनिरूपणम् । अद्भुतसागरे आथर्व्वणाद्भुतवचनम् । प्रकृतिविरुद्धमद्भुतमापद्ः प्राक्प्रबोधाय देवा सृजन्तीति । तेनापज्ज्ञानाय भूम्यादीनां पूर्वस्वभावप्रच्यवो देवकर्त्तृकोऽद्भुत इति । एवञ्च बुधोदयपर्वणि ग्रहादीनां गणितागणितत्वेन प्रकृतानामपि यदुत्पातत्वं तज्ज्ञातम् । तत्कारणञ्च गर्गसंहिताबार्हस्पत्ययोः ।

"अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्म्मतः।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते ॥
ततोऽपचारान्नियतमपवर्ज्जन्ति देवताः ।
ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान्॥
त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः ।
विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च ॥"

तांश्च परं न दर्शयेदित्याह विष्णुः । नोत्पातं दर्शयेदिति । तत्र वेलानक्षत्रमण्डलनिरूपणम्। यथा, दीपिकायाम् ।

"प्राग्द्वित्रिचतुर्भागैर्द्यूनिशोरद्भुतेषु सर्व्वेषु ।
अनिलाग्निशक्रवरुणा मण्डलपतयः शुभाशुभैश्च ॥"

वेलामण्डलः ।

"अर्य्यमृगादिचतुष्कचन्द्रतुरगादित्येषु वायुर्भवेत्
देवेज्याजविशाखयाम्ययुगले पित्रग्रहये चानलः ।
विश्वादित्रयधातृमैत्रयुगलेष्विन्द्रो भवेन्मण्डलः
सर्पोपान्त्यशतान्त्यमूलयुगलेशानेष्वपामीश्वरः॥
पवनदहनौ नेष्टौ योगस्तयोरतिदोषदः ।
सुरपतिवरुणौ शस्तौ योगस्तयोरतिशोभनः ॥
रुवरुणमसन्मिश्रः शक्रस्तथाग्निसमायुतः ।
फलविरहितः सेन्द्रो वायुस्तथाग्नियुतोऽम्बुपः ॥
यन्मण्डलेऽद्भुतं जातं शान्तिस्तद्देवताश्रया ।
तथा शान्तिद्वयं कार्य्यं मण्डलद्वयजाद्भुते ॥*"॥

विष्णुधर्म्मोत्तरे ।

"ग्रहर्क्षवैकृतं दिव्यं आन्तरीक्षं निबोध मे ।
उल्कापातो दिशां दाहः परिवेशस्तथैव च ॥
गन्धर्वनगरञ्चैव वृष्टिश्च विकृता तथा ।
एवमादीनि लोकेऽस्मिन् नाभसानि विनिर्द्दिशेत् ॥
चरस्थिरभवं भौमं भूकम्पमपि भूमिजम् ।
जलाशयानां वैकृत्यं भौमं तदपि कीर्त्तितम् ॥
भौमं चाल्पफलं ज्ञेयं चिरेण परिपच्यते।
नाभसं मध्यफलदं मध्यकालफलप्रदम् ।
दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारी तथैव च ॥*॥
शीतोष्णताविपर्य्यासः ऋतूनां रिपुजं भयम् ।
पुष्पे फले च विकृते राज्ञो मृत्युं तथा दिशेत् ॥
अकालप्रभवा नार्य्यः कालातीताः प्रजास्तथा ।
विकृताः प्रसवाश्चैव युग्मप्रसवनं तथा ॥
हीनाङ्गाः अधिकाङ्गाश्च जायन्ते यदि वा त्रयः ।
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देहस्य कुलस्य च विनिर्द्दिशेत् ॥
प्रदोषे कुक्कुटारावो हेमन्ते चापि कोकिलाः ।
अर्क्कोदयेऽर्काभिमुखः श्वारावो नृभयं दिशेत् ॥
उलूको वसते यत्र निपतेद्वा तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥
गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च ।
चिल्लश्च धर्म्मचिल्लश्च भासः पाण्डर एव च ॥
गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते ।
षण्मासात्तथा वर्षान्मृत्युः स्याद्गृहमेधिनः।
पत्न्याः पुत्त्रस्य वा मृत्युर्द्रव्यञ्चापि विनश्यति ॥
ब्राह्मणाय गृहं दत्त्वा दत्त्वा तन्मूल्यमेव वा ।
गृह्णीयाद्यदि रोचेत शान्तिञ्चेमां प्रयोजयेत् ॥

इमां वक्ष्यमाणाम् ॥ * ॥

"मांसास्थीनि समादाय श्मशानाद्गृध्रवायसाः
श्वा शृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत्।
विकिरन्ति गृहादौ च श्मशानं सा महीभवेत्।
चौरैण हन्यते लोकः परचक्रसमागमः ॥
संग्रामश्च महाघोरो दुर्भिक्षं मरकं तथा ।
अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः ॥
अकाले फलपुष्पाणि देशविद्रवकारणम् ॥"

मत्स्यपुराणे ।

"अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयं मतम् ।
अनृतौ तु दिनादूर्द्ध्वं वृष्टिर्ज्ञेया भयाय च ॥
निरभ्रे वाथ रात्रौ वा श्वेतं यस्योत्तरेण तु ।
इन्द्रायुधं ततो दृष्ट्वा उल्कापातं तथैव च ॥
दिग्दाहपरिवेशौ च गन्धर्व्वनगरं तथा ।
परचक्रभयं विद्याद्देशोपद्रवमेव च ॥"

भासो वनकुक्कुटः ॥*॥ कंसनिधनसूचने हरिवंशः ॥

"वक्रमङ्गारकश्चक्रे चित्रायां घोरदर्शनः ।
चलत्यपर्व्वणि मही गिरीणां शिखराणि च ॥"

बाणोत्पाते स एव ।

"दक्षिणां दिशमास्थाय धूमकेतुः स्थितोऽभवत्
वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः ॥" *॥

कृत्यचिन्तामणौ ।

"त्यक्ताशौचविवेकतत्त्ववसुधा लोकाः क्षुधापीड़िताः
विप्रा वेदहतास्तथा प्रचलिता बह्वाशिनो दुःखिताः ।
क्षौणीमन्दफला नृपाश्च विकलाः संग्रामघोरा मही
प्रेताघातदुरन्तपीड़िततरा देवेज्यराह्वोर्युतौ ॥
रक्ते शस्त्रोद्योगो मांसास्थिवशादिभिर्मरकः।
धान्यहिरण्यत्वक्फलकुसुमाद्ये वर्षिते भयं विद्यात् ।
अङ्गारपांशुवर्षे विनाशमुपयाति तन्नगरम् ॥
उपलं विनाजलधरैर्विकृता वा यदा प्राणिनो वृष्ट्या ।
छिद्रं वाप्यतिवृष्टिं शस्यानामीतिसंजननम् ॥"

बुधकौशिकसंवादे ।

"वल्गाः प्रपाते च फलं शरटस्य प्ररोहणे ।
शीर्षे राजश्रियोऽवाप्तिर्भाले चैश्वर्य्यमेव च ॥
कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम् ।
नासिकायाञ्च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम्॥
कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत् ।
धनलाभो बाहुमूले करयोर्धनवृद्धिदः ॥
स्तनमूले च सौभाग्यं हृदि सौख्यविवर्द्धनम् ।
पृष्ठे नित्यं महीलाभः पार्श्वयोर्बन्धुदर्शनम् ॥
कटिद्वये वस्त्रलाभो गुह्ये मृत्युसमागमः ।

जङ्घे चार्थचयो नित्यं गुदे रोगभयं भवेत् ॥
ऊर्व्वोस्तु वाहनात्राप्तिर्जानुजङ्घेऽर्थसंचयः ।
वामदक्षिणयोः पादे भ्रमणं नियतं भवेत् ॥
वल्गाः प्ररोहणे चैव पतने शरटस्य च ।
व्यत्यासाच्च फलञ्चैव तद्वदेव प्रजायते ॥
वल्गाः प्ररोहणं रात्रौ शरटस्य प्रपातनम् ।
निधनार्थाय भवति व्याधिपीड़ा विपर्य्यये ॥
पतनानन्तरं चैवारोहणं यदि जायते ।
पतने फलमुत्कृष्टं रोहणेऽन्यत् फलं भवेत् ॥
आरोहणस्योर्द्ध्ववक्त्रे अधोवक्त्रे च पातनम् ॥
भवेदिष्टफलं तस्य तत्काले जायते ध्रुवम् ॥*॥
स्पृष्टमात्रे तयोः सद्यः सचेलं जलमाविशेत् ।
पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनम् ॥
वल्लीरूपं सुवर्णस्य रक्तवस्त्रेण वेष्टयेत् ।
पूजयेद्गन्धपुष्पाद्यैस्तदग्रे पूर्णकुम्भके ॥
पञ्चगव्यं पञ्चरत्नं पञ्चामृतं सपल्लवम् ।
पञ्चवृक्षकषायञ्च निक्षिप्यावाहयेत्ततः ॥
पूजयेद्गन्धपुष्पाद्यैर्लोकपालांस्तथा ग्रहान् ।
मृत्युञ्जयेन मन्त्रेण समिद्भिः खदिरैः शुभैः ।
तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकम् ॥”
वल्ली गृहगोधिका । मृत्युञ्जयमन्त्रस्त्र्यम्बकमन्त्रः इति विद्याकरः ॥*॥ गर्गसंहिताबार्हस्पत्ययोः ।
“ये तेषु शान्तिं कुर्वन्ति न ते यान्ति पराभवम् ।
ये तु न प्रतिकुर्वन्ति क्रियया श्रद्धयान्विताः ।
दाम्भिक्याद्वा विमोहाद्वा विनश्यन्त्येव तेऽचिरात् ॥”*॥
अत्र निमित्तनिश्चयवतोऽधिकारोऽन्यथा दोष इत्याह मत्स्यपुराणम् ।
“भिन्नमण्डलवेलायां ये भवन्त्यद्भुताः क्वचित् ।
तत्र शान्तिद्वयं कार्य्यं निमित्तं सति नान्यथा ।
निर्निमित्तकृता शान्तिर्निमित्तमुपपादयेत् ॥”
एतच्च तत्तद्विशेषविहितशान्तिविषयम् ।
अन्यथा वेलामण्डलसन्देहे शान्तिर्न स्यात् ॥*॥
अतएवोक्तं योगियाज्ञवल्क्येन ।
“यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या समुदाहृतः ॥
गायत्र्या प्रयतः शुद्धः सर्वपापैः प्रमुच्यते ।
शान्तिकामश्च जुहुयात् गायत्रीमक्षतैः शुचिः ॥
हन्तुकामश्च नृपतेर्घृतेन जुहुयात् शुचिः ।
सावित्र्या शान्तिहोमांश्च कुर्य्यात् पर्वसु नित्यशः ॥
प्रणवव्याहृतिभ्याञ्च स्वाहान्तो होमकर्म्मणि ।
प्रतिलोमा प्रयोक्तव्या फट्कारान्ताभिचारिके ॥
मार्कण्डेयपुराणम् ।
“दिग्देशजनसामान्यं नृपसामान्यमात्मनि ।
नक्षत्रग्रहसामान्यं नरो भुङ्क्ते शुभाशुभम् ।
परस्पराभिरक्षा च ग्रहदोषेषु जायते ॥”
तथा ।
“तस्माच्छान्तिपरः प्राज्ञो लोकवादरतस्तथा ।
लोकवादांश्च शान्तीश्च ग्रहपीड़ासु कारयेत् ॥
भूदोहानुपवासांश्च शस्तं चैत्यादिवन्दनम् ।
कुर्य्यात् होमं तथा दानं श्राद्धं क्रोधविवर्ज्जनम् ॥
अद्रोहं सर्वभूतेषु मैत्रीं कुर्वन्ति पण्डिताः ।
वर्ज्जयेदुषतीं वाचमतिवादांस्तथैव च ॥
ग्रहपूजाञ्च कुर्व्वीत सर्वपीड़ासु मानवः ।
एवं शाम्यन्त्यशेषाणि घोराणि द्विजसत्तम ।
प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यनेकशः ॥”*॥
लोकवादाश्च तत्रैवोक्ता यथा,—
“आकाशाद्देवतानाञ्च देव्यादीनाञ्च सौहृदात् ।
पृथिव्यां प्रतिलोके च लोकवादा इति स्मृताः ॥”
ते च सर्वभूतडाकिन्याद्यभिभवशान्त्यर्थं लौकिकौषधमन्त्रादयः । विषहरीमङ्गलचण्डिकागीतादयः । चैत्यवृक्षादौ क्षेत्रपालकुलदेवतापूजा च ॥*॥ तथा चापस्तम्बः । स्त्रीभ्योऽवरवर्णेभ्यो धर्म्मशेषान् प्रतीयादित्येक इति । धर्मशेषान् श्रुतिस्मृतिसदाचारेष्वप्रसिद्धान् इति नारायणोपाध्यायाः ॥ भूदोहश्च पात्रं विना भूमौ गोस्तनं निष्पीड्य दुग्धोत्सर्गः । चैत्यः पूज्यत्वेन ख्यातो ग्रामप्रधानवृक्षः । तथा च बाणोत्पाते हरिवंशः ।
“अनेकशाखश्चैत्यश्च निपपात महीतले ।
अर्च्चितः सर्वकन्याभिर्दानवानां महात्मनाम् ॥”
उषतीं अकल्याणीम् । अतिवादश्च पूज्यमतिक्रम्य भाषणम् ॥*॥ मत्स्यपुराणम् ।
“काकस्यैकरवश्रावः प्रभाते दुःखदायकः ।
काको मैथुनकासक्तः श्वेतो वा यदि दृश्यते ॥
उलूको वसते यत्र निपतेत् वा तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥”*॥
वराहसंहितायाम् ।
“क्रीड़ानुरक्तो रतिमांसलुब्धो
भीतो रुजार्त्तः पतितो विहङ्गः ।
नासौ गृहस्थस्य विनाशहेतु-
र्दोषः समुत्पाद्यत आहुरार्य्याः ॥
गृहे पक्षिविकारेषु कुर्य्याच्छामरतर्पणम् ।
देवाः कपोता इति वा जप्तव्यं सप्तभिर्द्विजैः ॥
गावश्च देया विविधा द्विजानां
सकाञ्चना वस्त्रयुगोत्तरीयाः ।
एवं कृते पापमुपैति शान्तिं
मृगैर्द्विजैर्वापि निवेदितं तत् ॥”
द्विजैः पक्षिभिः । अपिना अन्यैरपि ॥ * ॥
भुजबलभीमे ।
“एका वृषस्त्रयो गावः सप्ताश्वा नव दन्तिनः ।
सिंहप्रसूतिकाश्चैव कथिताः स्वामिघातिकाः ॥”
सिंहप्रसूतिका गावः ॥ * ॥ मत्स्यपुराणे ।
“अङ्गे दक्षिणभागे तु शस्तं विस्फुरणं भवेत् ।
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥
लाञ्छनं पिटकञ्चैव ज्ञेयं विस्फुर्जितं तथा ।
विपर्य्ययेण विहितं सर्वं स्त्रीणां फलं तथा ॥”
“अनिष्टचिह्नोपगमे द्विजानां कार्य्यं सुवर्णेन च तर्पणं स्यात् ।” शङ्खः । दुःस्वप्नानिष्टदर्शनादौ घृतं हिरण्यञ्च दद्यादिति ॥*॥ मात्स्ये ।
“नमस्ते सर्वलोकेश नमस्ते भृगुनन्दन ।
कवे सर्व्वार्थसिद्ध्यर्थं गृहाणार्घ्यं नमोऽस्तु ते ॥
एवं शुक्रोदये कुर्व्वन् यात्रादिषु च भारत ।
सर्व्वान् कामानवाप्नोति विष्णुलोके महीयते ॥
नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृहस्पते ।
क्रूरग्रहैः पीड़ितानाममृताय नमो नमः ॥
संक्रान्तावपि कौन्तेय यात्रास्वभ्युदयेषु च ।
कुर्वन् बृहस्पतेः पूजां सर्वाम् कामान् समश्नुते ॥*॥”
वैष्णवामृते व्यासः ।
“ग्रहयज्ञैः शान्तिकैश्च किं क्लिश्यन्ति नरा द्विज ।
महाशान्तिकरः श्रीमान् तुलस्या पूजितो हरिः
उत्पादान् दारुणान् पुंसां दुर्निमित्ताननेकशः ।
तुलस्या पूजितो भक्त्या महाशान्तिकरो हरिः ॥”
अत्र ब्रह्मपुराणीयो मन्त्रः ।
“नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहेति ॥*॥”
छन्दोगपरिशिष्टम् । अथातो रजस्वलाभिगमने गोऽश्वभार्य्यासु गमने यमजजनने विजातीयजनने वा काककङ्कगृध्रबकश्येनभासचिल्लकपोतानां गृहप्रवेशे मानुषस्योपरिविश्रामणे एषामेव क्रियमाणे गृहद्वारारोहणे अन्येषु चाद्भुतेषु कल्पदृष्टेन विधिनाग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्ज्जुहोति अद्भुताय अग्नये स्वाहा सोमाय विष्णवे रुद्राय वायवे सूर्य्याय मृत्यवे विश्वेभ्यो देवेभ्यः स्वाहेति स्थालीपाकावृतान्यदिति ॥ * ॥ कपोतं विशेषयति शौनकः ।
“रक्तपादः कपोताख्यो अरण्यौकाः शुकच्छविः
स चेच्छालां विशेच्छालासमीपञ्च व्रजेद्यदि ।
अन्येषु गृहमध्ये वा वल्मीकस्योद्गमादिषु ॥”
कल्पदृष्टेन विधिना गृह्योक्तेन प्रायश्चित्ताज्याहुतीः अद्भुतदोषप्रशमनार्थाः सप्ताज्याहुतीः अद्भुतायाग्नये स्वाहा इत्यादिमन्त्रैः तत्स्थालीपाकेति कर्त्तव्यतया पायसचरुभिरेतेभ्यो देवेभ्यो जुहुयात् । छन्दोगपरिशिष्टम् । पश्चात् घृतपायसेन ब्राह्मणान् भोजयित्वा गोवरं दत्त्वा शान्तिर्भवतीति । गोवरं गोश्रेष्ठम् । दक्षिणां तां गां कृत्वा दोषशान्तिर्भवतीति । तथा चोक्तम् ।
“गौर्विशिष्टतमा लोके वेदेष्वपि निगद्यते ।
न ततोऽन्यद्वरं यस्मात् तस्माद्गौर्वरमुच्यते ॥”
छन्दोगपरिशिष्टम् । यस्त्वेषामन्यतममापन्नः प्रायश्चित्तं न कुर्य्यात्तस्य गृहपतेर्मरणं सर्वस्वनाशो वा भवति तस्मात् प्रायश्चित्तं कर्त्तव्यं कर्मापवर्गे वामदेव्यगानं शान्तिः शान्तिरिति । अपवर्गे समाप्तौ । वामदेव्यगानं शान्तिः कार्य्या । आवृत्तिः प्रकरणसमाप्त्यर्था । बार्हस्पत्ये ।
“शमयन्त्याशु सम्राहात् कम्पादिकृतं निमित्तमाश्वेव ।
अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि ॥*॥”

त्राहः।

"ये च न दोषं जनयन्त्युत्पातान् तानृतुस्वभाव-
कृतान्।
ऋषिपुत्त्रकृतैः श्लोकैर्विद्यादेभिः समासोक्तैः ॥"

तथा च मत्स्यपुराणम्।

"वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः।
परिवेशरजोधूमरक्तार्कास्तमयोदयाः ॥
द्रुमेभ्योऽथ रसस्नेहमधुपुष्पफलोद्गमाः।
गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥*॥
तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम्।
अनग्निज्वलनं स्फोटं धूमरेणुनिराकूलम् ॥
रक्तपद्मारुणा सन्ध्या नभः क्षुब्धार्णवोपमम्।
सरिताञ्चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत्॥*॥
शक्रायुधपरीवेशौ विद्युच्छुष्कविरोहणम्।
कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः ॥
नद्युदपानसरसां वृद्ध्यूर्द्ध्वा भवनप्लवाः।
पतनञ्चाद्रिगेहानां वर्षासु न भयावहम् ॥"

हरिवंशे वर्षावर्णनायाम्।

"क्वचित् कन्दरहासाढ्यं शिलीन्ध्राभरणं
क्वचित्।"

इति दर्शनात् वर्षासु शिलीन्ध्रोद्गमो न भयावहः॥

"दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम्।
ग्रहनक्षत्रताराणां दर्शनञ्च दिवाम्बरे॥
गीतवादित्रनिर्घोषो वनपर्वतसानुषु।
शस्यवृद्धी रसोत्पत्तिरपापाः शरदि स्मृताः ॥*॥
शीतानिलतुषारत्वं नर्द्दनं मृगपक्षिणाम्।
रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥
दिशो धूमान्धकाराश्च शलभा वनपर्वताः।
उच्चैः सूर्य्योदयास्तत्वं हेमन्ते शोभना मताः ॥*॥
हिमपातानिलोत्पपातविरूपाद्भुतदर्शनम्।
दृष्टाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥
चित्रा गर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिणाम्।
पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः ॥*॥
ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभावहाः।
ऋतावन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः॥*
उन्मत्तानाञ्च या गाथा शिशूनां चेष्टितञ्च यत्।
स्त्रियो यच्च प्रभाषन्ते तत्र नास्ति व्यतिक्रमः ॥
पूर्व्वञ्चरति देवेषु पश्चाद्गच्छति मानुषान्।
नादेशिता वाग्वदति सत्या ह्येषा सरस्वती ॥"

वृहस्पतिः।

"ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम्
श्रावयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः ॥"

विनेया दण्डनीयाः। इति ज्योतिस्तत्त्वम् ॥*॥ भौमदिव्यान्तरीक्षोत्पातशान्तिर्मात्स्ये २०२ अध्यायावधि २१२ अध्यायपर्य्यन्तं द्रष्टव्या। तथा देवीपुराणे महाभ्युदयपादे सर्व्वदेवीकोसर्व्वोत्पातशान्तिसमासाध्याये चण्डीशब्दे च द्रष्टव्या। तन्त्रोक्ता शान्तिः षट्कर्म्मशब्दे द्रष्टव्या ॥*॥ अथ शान्तिकपौष्टिककर्म्मदिनम्। तत्र वारा रविसोमबुधवृहस्पतिशुक्राणां तत्र नक्षत्राणि उत्तराषाढ़ा उत्तरफल्गुणी उत्तरभाद्रपत् रोहिणी चित्रा अनुराधा मृगशिरः रेवती पुष्या अश्विनी हस्ता। तत्र चन्द्रः शोभनः। लग्नं शोभनम्। इति ज्योतिषतत्त्वम्

शान्तिः, पुं, वृत्तार्हद्विशेषः। जिनचक्रवर्त्तिविशेषः इति हेमचन्द्रः ॥ दशमन्वन्तरीयेन्द्रः। यथा,—

"धर्म्मपुत्त्रस्य पुत्त्रांस्तु दशमस्य मनोः शृणु।
सुक्षेत्रश्चोत्तमौजाश्च भूमिश्रेण्यश्च वीर्य्यवान् ॥
शतानीको निरमित्रो वृषसेनो जयद्रथः।
भूरिद्युम्नः सुवर्च्चाश्च शान्तिरिन्द्रः प्रतापवान् ॥
आपो मूर्त्तिर्हविष्मांश्च स्वकृतिश्चाव्ययस्तथा।
नाभागोऽप्रतिमश्चैव सौरभा ऋषयस्तथा ॥
प्राणाख्याः शतसंख्याश्च देवतानां गणास्तथा।
वालिशत्रुस्तं हरिश्च गदया घातयिष्यति ॥"

इति गारुड़े ८७ अध्यायः ॥

शान्तिकामः, त्रि, (शान्तिं कामयते इति। कम + णिङ् + अच्।) शान्त्यभिलाषी। यथा,

"श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत।
वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्नपि ॥"

इति संस्कारतत्त्वम् ॥

शान्तिगृहं, क्ली, (शान्तेर्गृहम्।) शान्त्यालयः। यज्ञान्ते शान्तिकुम्भजलेन स्नानस्य गृहम्। तत्पर्य्यायः। आथर्व्वणम् २। इति हेमचन्द्रः ॥ (यथा, वृहत्संहितायाम्। ४४। ५।

"कण्ठेषु निबध्नीयात् पुष्ट्यर्थं शान्तिगृहगानाम्"

शान्त्वं, क्ली, सान्त्वम्। इत्यमरटीकासारसुन्दरी।

शान्त्वतिः, स्त्री ब्राह्मणयष्टिका। इति शब्दचन्द्रिका॥ पुस्तकान्तरे श्वान्ततिरिति च पाठः

शापः, पुं, (शपनमिमि। शप + घञ्।) आक्रोशः। (यथा रघुः। ५। ५६।

"संमोचितः सत्त्ववता त्वयाहं
शापाच्चिरप्रार्थितदर्शनेन ॥")

दिव्यम्। इति मेदिनी ॥ आद्यस्य पर्य्यायः। अकरणिः २। इत्यमरः ॥ अजीवनिः ३ अजननिः ४ अवग्रहः ५ निग्रहः ६। इति भरतः ॥ अभिसम्पातः ७। इति ग्रन्थान्तरम् ॥ शेषस्य पर्य्यायः। शपनम् २ शपथः ३। इत्यमरः ॥ मिथ्यानिरसनम् ४। इति शब्दरत्नावली ॥ (उपद्रवः। यथा, रामायणे।१।२६।३५

"उवास रजनीं तत्र ताड़काया वने सुखम्।
मुक्तशापं वनं तच्च तस्मिन्नेव तदाहनि।
रमणीयं विबभ्राज यथा चैत्ररथं वनम् ॥"

"मुक्तशापं अपगतोपद्रवम्।" इति तट्टीका ॥ जलम्। यथा, ऋग्वेदे। १०। २८। ४।

"प्रतीपं शापं नद्यो वहन्ति।"

"नद्यो गङ्गाद्याः सरितः प्रतीपं प्रतिकूलं शापं उदकं वहन्ति।" इति तद्भाष्ये सायणः ॥)

शापटिकः, पुं, मयूरः। इति केचित् ॥

शापास्त्रः, पुं, (शाप एव अस्त्रं यस्य।) मुनिः। इति त्रिकाण्डशेषः ॥

शाफरिकः, पुं, (शफरान् हन्तीति। शफर + "पक्षिमत्स्यमृगान् हन्ति।" ४।४।३५। इति ठक्।) मत्स्यधारकः। इति केचित् ॥

शाब्दः, त्रि, (शब्दस्यायमिति। शब्द + अण्।) शब्दसम्बन्धी। यथा। एकः शाब्दोऽपरस्वार्थः। इति दायभागः ॥ (शब्दमयः। यथा, भागवते। २। २। २।

"शाब्दस्य हि ब्रह्मण एष पन्था
यन्नामभिर्ध्यायति धीर पार्थैः ॥")

सरस्वत्यां स्त्री, शाब्दी। इति केचित् ॥

शाब्दबोधः, पुं, (शाब्दः शब्दसम्बन्धी बोधः।) शब्दार्थज्ञानम्। न्यायमते पदार्थज्ञानजन्यज्ञानम्। तस्य करण पदज्ञानम्। तस्य कारणं पदशक्तिज्ञानम्। कदाचित् लक्षणाज्ञानम्। एवं आकाङ्क्षायोग्यतासत्तितात्पर्य्यज्ञानञ्च। यथा,—

"पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥"

इति भाषापरिच्छेदः ॥ * ॥

शाब्दबोधप्रकारं दर्शयति पदज्ञानन्त्विति। न तु ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात्। पदार्थधीरिति पदजन्यपदार्थस्मरणं व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पदजन्यत्वं बोध्यं अन्यथा घटादिपदात् समवायसम्बन्धेन आकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिः शक्तिलक्षणान्यतरसम्बन्धः। अत्रैव शक्तिज्ञानस्य उपयोगः। पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य हि सम्बन्धिज्ञानविधेयार्थस्मारकत्वम्। *। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा आधुनिके नाम्नि शक्तिरस्त्येव एकादशेऽहनि पिता नाम कुर्य्यादितीश्वरेच्छायाः सत्त्वात् आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छेव तेनाधुनिकसङ्केतेऽपि शक्तिरस्तीति वदन्ति।*। शक्तिग्रहश्च व्याकरणादितः। तथा हि।

"शक्तिग्रहं व्याकरणोपमान-
कोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥"

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति क्वचित्तु सति बाधके त्यज्यतेऽपि। यथा, वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते। चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयस्तत्र गौरवान्न जन्यते किन्तु कृतौ शक्तिग्रहो लाघवात्। कृतिश्चैत्रादौ प्रकारीभूय भासते। न च कर्त्तुरनभिधानाच्चैत्रादिपदानन्तर तृतीया स्यादिति वाच्यं कर्त्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात्। संख्याभिधानयोग्यस्य कर्म्मत्वाद्यनवरुद्धः। प्रथमान्तपदोपस्थाप्यकर्म्मत्वादीत्यस्य विशेषणत्वतात्पर्य्याविषयत्वमर्थः तेन चैत्र इव

गच्छतीत्यादौ न चैत्रे संख्यान्वयः। यत्र कर्म्मादौ न विशेषणत्वतात्पर्य्यं तद्वारणाय प्रथमान्तेति। यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः तेन चैत्र इव गच्छतीत्यत्र चैत्रादेर्व्वारणं स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम्। तस्य द्वितीयान्तोपस्थाप्यत्वाद्वारणम्। एवं व्यापारेऽपि न शक्तिर्गौरवात्। रथो गच्छति इत्यादौ तु स्वव्यापारे आश्रयत्वे वा लक्षणा। जानाति इत्यादौ तु आश्रयत्वे नश्यतीत्यादौ प्रतियोगित्वे निरूढ़लक्षणा। उपमानादयथा शक्तिग्रहस्तथोक्तम्॥ * ॥ एवं कोषादपि शक्तिग्रहः सति बाधके क्वचित्त्यज्यते यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोषे व्युत्पादिता तथापि लाघवात् नीलादौ शक्तिः नीलादिविशिष्टे लक्षणेति॥ * ॥ एवमाप्तवाक्यादपि। यथा, कोकिलः पिकपदवाच्यः इत्यादिशब्दात् पिकादिशक्तिग्रहः॥*॥ एवं व्यवहारादपि। यथा, प्रयोजकवृद्धेन घटमानयेत्युक्तं तत् श्रुत्वा प्रयोज्यवृद्धेन घट आनीतस्तदवधार्य्य पार्श्वस्थो बालो घटानयनरूपं कार्य्यम्। घटमानय इति शब्दप्रयोज्यं अवधारयति ततश्च घटमपसारय गामानय इत्यादौ आवापोद्वापाभ्यां घटादिपदानां कार्य्यान्वितघटादौ शक्तिं गृह्लाति॥*॥ एवं वाक्यशेषादपि शक्तिग्रहः। यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशिष्टे आर्य्याणां प्रयोगः कङ्गौ च म्लेच्छानाम्। तत्र हि यथान्या ओषधयो म्लायन्ते तथैते मोदमाना इवोत्तिष्ठन्ति॥
"वसन्ते सर्व्वशस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥"
इति वाक्यशेषात् दीर्घशूके शक्तिर्निर्णीयते कङ्गौ तु शक्तिभ्रमात् प्रयोगः। नानाशक्तिकल्पने गौरवात्। हरिपदादौ तु विनिगमकाभावान्नानाशक्तिकल्पनम्॥*॥ एवं विवरणादपि शक्तिग्रहः। विवरणन्तु तत्समानार्थपदान्तरेण तदर्थकथनम्। यथा घटोऽस्ति इत्यस्य कलसोऽस्तीत्यनेन विवरणाद्घटपदस्य कलसे शक्तिग्रहः। एवं पचति इत्यस्य पाकं करोति इत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते॥ * ॥ एवं प्रसिद्धपदसान्निध्यादपि शक्तिग्रहः यथा। इह सहकारतरौ मधुरं पिको रौति इत्यादौ पिकपदस्य शक्तिग्रह इति। तत्र जाताविव शक्तिर्न तु व्यक्तौ व्यभिचारादानन्त्याच्च॥ * ॥ शक्तं पदन्तु क्वचिद्यौगिकं क्वचिद्रूढ़ं क्वचिद्योगरूढ़ं क्वचिद्यौगिकरूढ़म्। यत्रावयवार्थ एव बुध्यते तद्यौगिकं यथा पाचकादिपदम्। यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढ़ं यथा गोमण्डपादि पदम्। यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढ़ं यथा पङ्कजादिपदम्। तथा हि पङ्कजपदमवयवशक्त्या पङ्कजनिकर्त्तृरूपमर्थं बोधयति समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति। यत्र अवयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढ़ं यथोद्भिदादिपदम्। तत्र हि ऊर्द्धभेदनकर्त्ता तरुगुल्मादिरपि बुध्यते। इति सिद्धान्तमुक्तावली॥

शाब्दिकः, पुं, (शब्दं करोतीति। शब्द + "शब्ददर्दुरं करोति।" ४।४।३४। इति ठक्।) शब्दशास्त्रवेत्ता। वैयाकरणः। आदिशाब्दिका यथा,—
"इन्द्रश्चन्द्रः काशकृत्स्ना पिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः॥"
इति कविकल्पद्रुमः॥
नव्यशाब्दिका यथा। क्रमदीश्वरः। सर्व्ववर्म्मा। पद्मनाभमिश्रः। वोपदेवः। सत्सर्वानन्दः। भरतमल्लिकप्रभृतयः॥ शब्दसम्बन्धिनि, त्रि॥

शाम, [न्] क्ली, साम। इत्यमरटीकासारसुन्दरी॥

शामनं, क्ली,(शमनमेव। स्वार्थे अण्।)मारणम्। शान्तिः। इति केचित्॥

शामनः, पुं, (शमन एव। प्रज्ञाद्यण्।) शमनः। इति पुराणम्॥

शामनी, स्त्री, (शमनस्य यमस्येयमिति। शमन + अण्। ङीप्।) दक्षिणा दिक्। इति राजनिर्घण्टः॥

शामित्रं, क्ली, यज्ञम्। पशुबन्धनम्। यज्ञपात्रम्। इति केचित्॥ (शमितुरिदम्। शमितृ + अण्। पशुहिंसनम्। यथा, भागवते। १।१६।८।
"इहोपहूतो भगवान् मृत्युः शामित्रकर्म्मणि।
न कश्चिन्म्रियते तावद् यावदास्ते इहान्तकः॥")

शामीलं क्ली, (शम्याः विकारः। "शम्याष्ट्लञ्।" ४।३।१४२। इति ट्लञ्।) भस्म। इति सिद्धान्तकौमुदी॥

शामीली, स्त्री, स्रुक्। इति सिद्धान्तकौमुदी॥

शाम्बरी, स्त्री, शम्बरदैत्यनिर्म्मितमाया। इन्द्रजालादिमाया। इत्यमरभरतौ॥

शाम्बविकः, पुं, शाङ्खिकः। इति जटाधरः।

शाम्बुकः, पुं, शम्बूकः। इति शब्दरत्नावली॥ शामुक इति भाषा॥

शाम्बूकः, पुं, शम्बुकः। इत्यमरटीकायां भरतः॥

शाम्भवं, क्ली, (शम्भोरुपवेशाय इदम्। अण्।) देवदारु। इति राजनिर्घण्टः॥

शाम्भवः, पुं, कर्पूरः। शिवमल्ली। गुग्गुलुः। इति राजनिर्घण्टः॥ विषभेदः। इति शब्दचन्द्रिका॥ शम्भुपुत्त्रः। शम्भुपूजकः। शम्भुसम्बन्धिनि, त्रि॥ (यथा, कथासरित्सागरे। १२।१६७।
"तत्र च प्रविशन्त्यग्रे बहवः शाम्भवा गणाः॥")

शाम्भवी, स्त्री, नीलदूर्व्वा। इति राजनिर्घण्टः॥ दुर्गा। यथा,—
"शाम्भवी देवमाता च चिन्ता रत्नप्रिया सदा॥"
इति तन्त्रसारे दुर्गाशतस्तोत्रम्॥

शायकः, पुं, (शाययति शत्रून्। शी + णिच् + ण्वुल्। यद्वा, शेते तूणीरे इति। शी + ण्वुल्।) बाणः। इति जटाधरः॥ (यथा, नैषधचरिते। ४।१०१।
"प्रियसखीनिवहेन सहाथ सा
व्यरचयद्गिरमर्द्धसमस्यया।
हृदयमर्म्मणि मन्मथशायकैः
क्षततमा बहु भाषितुमक्षमा॥")
खड्गः। इत्यमरटीकायां स्वामी॥

शार, त् क दौर्ब्बल्ये। इति कविकल्पद्रुमः।(अदन्त चुरा०-पर०-अक०-सेट्।)अशशारत्। इति दुर्गादासः॥

शारं, त्रि, (शॄ + घञ्।) कर्व्वुरवर्णः। इत्यमरः॥

शारः, पुं, (शीर्य्यतेऽनेन शृणाति वा। शॄ + "शॄ वायुवर्णनिवृत्तेषु।" ३।३।२१। इत्यस्य वार्त्तिकोक्त्या घञ्।) वायुः। इत्यमरः॥ अक्षोपकरणम्। इति मेदिनी॥ हिंसनम्। कर्व्वुरवर्णः। कुशी, स्त्री। इति केचित्॥

शारङ्गः, पुं, (शीर्य्यते आतपैः। शॄ + "तरत्यादिभ्यश्च।" उणा० १।११९। इति अङ्गच्।) चातकः। (यथा,—
"अष्टौ मासान् जलधर तवापेक्षया शुष्ककण्ठः
शारङ्गोऽहं निरवधिवतव्यानिनायाति कृत्स्नात्
आस्तां तावत् सलिलकणिकालाभसम्भावनापि
वर्षारम्भप्रथमसमये दारुणो वज्रपातः॥"
इत्युद्भटः॥)
हरिणः। (यथा, शाकुन्तले। १।
"एष राजेव दुष्मन्तः शारङ्गेणातिरंहसा॥")
हस्ती। भृङ्गः। मयूरः। कर्व्वुरवर्णविशिष्टे, त्रि। इत्यमरटीकायां मुकुटादयः॥

शारङ्गी, स्त्री, (शारङ्ग + ङीष्।) वाद्ययन्त्रविशेषः। इति शब्दरत्नावली॥

शारदं, क्ली,(शरदि भवम्। शरद् + "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्"। ४।३।१६। इति अण्।) श्वेतकमलम्। इति राजनिर्घण्टः॥ (यथा, महाभारते। २।६१।३४।
"शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया।
शारदोत्पलसेविन्या रूपेण श्रीसमानया॥")
शस्यम्। इति मेदिनीशब्दरत्नावल्यौ॥

शारदः पुं, (शरद् + अण्।) कासः। वकुलः। हरिन्मुद्गः। इति राजनिर्घण्टः॥ वत्सरः। इति मेदिनी॥ पीतमुद्गः। इति हेमचन्द्रः॥ रोगः। इति सिद्धान्तकौमुदी॥

शारदः, त्रि, (शरदि भवः। शरद् + अण्।) शरज्जातः। (यथा, मनौ। ६।११।
"वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः॥")
नूतनः। अप्रतिभः। इति मेदिनी॥ शालीनः। इति विश्वः॥

शारदा स्त्री, सरस्वती। इति त्रिकाण्डशेषः॥ (यथा, महिम्नस्तोत्रे।
"लिखति यदि गृहीत्वा शारदा सर्व्वकालम्॥")
दुर्गा (यथा, भागवते। १०।२।१२॥

"माया नारायणीशानी शारदेत्यम्बिकेति च ॥")
अस्या व्युत्पत्तिर्यथा,—
"शरत्काले पुरा यस्मात् नवम्यां बोधिता सुरैः।
शारदा सा समाख्याता पीठे लोके च नामतः॥"
इति तिथ्यादितत्त्वम् ॥
वीणाविशेषः। इति शब्दरत्नावली ॥ ब्राह्मी। सारिवा। इति राजनिर्घण्टः ॥

शारदिकं, क्ली, (शरद् + "श्राद्धे शरदः।" ४।३।१२। इति ठञ्।) श्राद्धम्। इति सिद्धान्तकौमुदी ॥

शारदिकः, पुं, (शरद् + "विभाषा रोगातपयोः।" ४।३।१३। इति ठञ्।) रोगः। आतपः। इति सिद्धान्तकौमुदी ॥

शारदी, स्त्री, (शारद + ङीप्।) तोयपिप्पली। सप्तपर्णः। इति मेदिनी ॥ कोजागरपूर्णिमा। इति शब्दरत्नावली ॥ शरत्कालीने, त्रि। यथा, स्कान्दभविष्ययोः।
"शारदीचण्डिकापूजा त्रिविधा परिगीयते।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः।
माहात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम् ॥
पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनाः प्रिये।
राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा ॥
सुरामांसाद्युपहारैर्जपयज्ञैर्विना तु या।
विना मन्त्रैस्तामसी स्यात् किरातानाञ्च सम्मता ॥"
इति तिथ्यादितत्त्वम् ॥
(संवत्सरसम्बन्धिनी। यथा, ऋग्वेदे।१।१३१।४।
"यदिन्द्रशारदीरवातिरः सा सहानो अवातिरः ॥")

शारदीयमहापूजा, स्त्री, (शारदीया महापूजा।) शरत्कालीनदुर्गामहापूजा। यथा,—
"शारदीया महापूजा चतुःकर्म्ममयी शुभा।
तां तिथित्रयमासाद्य कुर्य्यात् भक्त्या विधानतः ॥"
इति तिथ्यादितत्त्वम् ॥
अपि च।
"हते घोरे महावीरे सुरासुरभयङ्करे।
देवीमुपासका देवाः प्रभूता राक्षसास्तथा ॥
समेताः सर्वदेवास्ते देवीं भक्त्या तुतोषिरे।
बलिञ्च दद्युर्भूतानां महिषाजामिषेण च ॥
एवं तस्मिन् दिने वत्स प्रेतभूतसमाकुलम्।
कृतवान् सर्वदेवश्च पूजाश्च शाश्वतीर्महान् ॥
जलदान्तेऽश्विने मासि महिषारिनिवर्हिणीम्।
देवीं संपूजयित्वा तु अष्टमीष्वर्द्धरात्रिषु ॥
ये घातयन्ति सदा भक्त्या ते भवन्ति महाबलाः
बलिञ्च ये प्रयच्छन्ति सर्वभूतविनाशनम् ॥
तेषान्तु तुष्यते देवी यावत् कल्पन्तु शाङ्करम्।
क्रीड़ते विविधैर्भोगैर्देवलोके सुदुर्लभे ॥
यावद्भूर्वायुराकाशं जलं वह्निशशिग्रहाः।
तावच्च चण्डिकापूजा भविष्यति सदा भुवि ॥
प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च।
महाशब्दो नवम्याश्च लोके ख्यातिं गमिष्यति॥
इन्द्र उवाच।
आश्विने घातिते घोरे नवमी प्रतिवत्सरम्।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम् ॥
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम्।
कर्त्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥
कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम्।
अयाची त्वथ वैकाशी नक्ताशी वाथ वायुदः ॥
प्रातःस्नायी जितद्वन्द्वः त्रिकालं शिवपूजकः।
जपहोमसमायुक्तः कन्यकां भोजयेत् सदा ॥
अष्टम्यां नवगेहानि दारुजानि शुभानि च।
एवं वा चित्तभावेन कारयेत् सुरसत्तम ॥
तस्मिन् देवी प्रकर्त्तव्या हैमी वा राजती च वा
मृद्वार्क्षी लवणोपेता खड्गे शूलेऽथ पूजयेत् ॥
सर्वोपहारसम्पन्नो वस्त्ररत्नफलादिभिः।
कारयेद्रथदोलादीन् पूजाञ्च बलिदैवकीम् ॥
पुष्पादिद्रोणविल्वाम्रजातीपुन्नागचम्पकैः।
विचित्रां कारयेत् पूजां अष्टम्यामुपवासयेत् ॥
दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः सुभावितः।
तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तमैः ॥
पञ्चाब्दं लक्षणोपेतं गन्धधूपस्रगर्च्चितम्।
विधिवत् कालि कालीति जप्त्वा खड्गेन घातयेत् ॥
तस्योत्थं रुधिरं मांसं गृहीत्वा पूतनादिषु।
नैरृताय प्रदातव्या महाकौशिकमन्त्रितम् ॥
तस्याग्रतो नृपः स्नायाच्छत्रं कृत्वा तु पिष्टजम्
खड्गेन घातयित्वा तु दद्यात् स्कन्दविशाखयोः ॥
ततो देवीं स्नापयेत् प्राज्ञः क्षीरसर्पिर्जलादिभिः।
कुङ्कुमागुरुकर्पूरचन्दनैश्चारुधूपकैः ॥
हैमानि पुष्परत्नानि वासांसि स्वाहृतानि च।
निवेद्यं सुप्रभूतन्तु देयं देव्याः सुभावितैः ॥
अश्वमेधमवाप्नोति भक्तिमान् सुरसत्तम।
महानवम्यां पूजेयं सर्वकामप्रदायिका ॥
सर्वेषु सर्ववर्णेषु तव भक्त्या प्रकीर्त्तिता।
कृत्वाप्नोति यशो राज्यं पुत्त्रायुर्धनसम्पदः ॥"
इति देवीपुराणे २८।३० अध्यायात् सङ्कलितं न तु सक्रमकम् ॥

शारिः, पुं, (शॄ हिंसायाम् + इञ्।) अक्षोपकरणम्। पाशकादेर्बलम्। गुटिका। इति मेदिनी ॥ तत्पर्य्यायः। शारः २ खेलनी ३। इति हेमचन्द्रः ॥

शारिः, स्त्री, (शॄ + "अः शकुनौ।" उणा० ४।१२७। इति इञ्।) शकुनिकाभेदः। युद्धार्थगजपर्य्याणम्। व्यवहारान्तरम्। इति मेदिनी॥ कपटः। इति धरणिः ॥

शारिका, स्त्री, (शारिरेव। स्वार्थे कन्।) पक्षिविशेषः। मयना इति भाषा। तत्पर्य्यायः। पीतपादा २ गोराटी ३ गोकिराटिका ४। इति हेमचन्द्रः ॥ सारिका ५ शारी ६ चित्रलोचना ७ शारिः ८। इति शब्दरत्नावली ॥ मदनशारिका ९ शलाका १०। इति जटाधरः ॥ वीणादिवादनम्। तत्पर्य्यायः। कोणः २। इति हेमचन्द्रः ॥

शारिफलं, क्ली, पुं, (शारीणां खेलनीनां फलम्।) शारिपट्टः। शारिखेलनाधारः। छक् इति भाषा। तत्पर्य्यायः। अष्टापदम् २। इत्यमरः ॥ फलकः ३। इतिशब्दरत्नावली ॥ आकर्षः ४ शारिफलकः ५ बिन्दुतन्त्रः ६ अक्षपीठी ७। इति जटाधरः ॥

शारिफलकः, पुं, क्ली, (शारीणां फलकः।) शारिफलम्। इति जटाधरः ॥

शारिवा, स्त्री, श्यामलता। तत्पर्य्यायः। गोपी २ श्यामा ३ अनन्ता ४ उत्पलशारिवा ५। इत्यमरः ॥ पञ्च श्यामलतायाम्। नागजिह्वायामिति केचित्। गोप्यादित्रयं श्यामलतायां अनन्तादिद्वयं अनन्तमूले इति केचित्। गुपू रक्षणे शोणादित्वादीप् गोपा च।
'गोपीश्यामा गोपपत्नी गोपा गोपालिकापि च।'
इति वाचस्पतिः।
"एकं वा शारिवामूलं सर्वव्रणविशोधनम्।"
इति वैद्यकम्। इति भरतः ॥
अस्या गुणः। वायुपित्तरक्ततृष्णाच्छर्दिज्वरनाशित्वम्। इति राजवल्लभः ॥

शारिशृङ्खला, स्त्री, (शारीणां शृङ्खला यत्र।) पाशकविशेषः। यथा,—
"चुञ्चुरी तिन्तिड़ी द्यूतं पञ्चमी शारिशृङ्खला।
नयपीठी चाष्टकाक्षो नयः स्याज्जयपुत्त्रकः।
एते पाशकभेदाः स्युर्जयकोलाहलोऽपि च ॥"
इति शब्दरत्नावली ॥

शारी, स्त्री, (शॄ + इञ्। वा ङीष्।) कुशा। इति केचित् ॥ (शकुनिकाभेदः। यथा, आर्य्यासप्तशत्याम्। ६२३।
"सा विरहदहनदूना मृत्वा मृत्वापि जीवति वराकी।
शारीव कितव भवतानुकूलिता पातिताक्षेण॥")

शारीरं, क्ली, वृषः। (शरीरे भवः। शरीर + अण्।) शरीरजाते, त्रि। इति मेदिनी ॥*॥
शारीरदण्डो यथा,—
"दिग्दण्डं प्रथमं कुर्य्यात् वाग्दण्डं तदनन्तरम्
तृतीयं धनदण्डञ्च वधदण्डमतः परमिति ॥"
वधदण्डोऽपि शारीरो ब्राह्मणव्यतिरिक्तानाम्।
इति मिताक्षरायां व्यवहारकाण्डम् ॥*॥
शारीरदुःखं यथा,—
"आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः ॥
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः।
गुल्मार्शश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥
तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥
कामक्रोधभयद्वेषलोभमोहविषादजः।

शोकासूयापमानेर्ष्यामात्सर्य्यादिभयस्तथा ॥
मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा ।
इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥
दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ।
सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते ॥
उल्वसंवेष्टितो भुग्नपृष्ठग्रीवातिसंहतिः ।
अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः ॥
अतितापिभिरत्यर्थं वर्द्धमानातिवेदनः ।
प्रसारणाकुञ्चनादौ नाङ्गानां प्रभुरात्मनः ॥
शकृन्मूत्रमहापङ्कशायी सर्वत्र पीड़ितः ।
निरुच्छ्वासः सचैतन्यः स्मरन् जन्मशतान्यथ ॥
आस्ते गर्भेऽतिदुःखेन निजकर्म्मनिबन्धनः ।
जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः ॥
प्रजापत्येन वातेन पीड्यमानास्थिबन्धनः ।
अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः ॥
क्लेशैर्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः ।
मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना ॥
विज्ञानं भ्रंशमाप्नोति जातश्च मुनिसत्तम ।
कण्टकैरिव तुन्नाङ्गः क्रकचैरिव दारितः ॥
पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा ।
कण्डूयनेऽपि वाशक्तः परिवर्त्तेऽप्यनीश्वरः ॥
स्नानपानादिकाहारमप्याप्नोति परेच्छया ।
अशुचिः स्रस्तरे सुप्तः कीटदंशादिभिस्तथा ॥
भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ।
जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि च ॥
बालभावे यदाप्नोति आधिभौतादिकानि च ।
अज्ञानतमसाच्छन्नो मूढ़ान्तःकरणो नरः ॥
न जानाति कुतः कोऽहं क्व वा गन्ता किमा-
त्मकः ॥"

इति विष्णुपुराणे ६ अंशे ५ अध्यायः ॥*॥ अथातः शरीरसंख्याव्याकरणं शारीरं व्याख्यास्यामः । शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं गर्भ इत्युच्यते । तच्च चेतनावस्थितं वायुर्विभजति । तेज एनं पचति । आपः क्लेदयन्ति । पृथिवी संहन्ति । आकाशं विवर्द्धयति । एवं विवर्द्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते । तच्च षड़ङ्गं शाखाश्चतस्रो मध्यं पञ्चमं षष्ठं शिर इति ॥*॥ अतः परं प्रत्यङ्गानि कथ्यन्ते । मस्तकोदरपृष्ठनाभिललाटनासाचिवुकवस्तिग्रीवा इत्येता एकैकाः । कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषणपार्श्वस्फिक्जानुबाहूरुप्रभृतयो द्वे द्वे । विंशतिरङ्गुलयः । स्रोतांसि च वक्ष्यमाणानि । एष प्रत्यङ्गविभाग उक्तः ॥*॥ तस्य पुनः संख्यानम् । त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्च्चा रज्जवः सेवन्यः संघाताः सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्म्माणि सिरा धमन्यो योगवहानि स्रोतांसि च ॥*॥ त्वचः सप्त । कलाः सप्त । आशयाः सप्त । धातवः सप्त । सप्त शिराशतानि । पञ्च पेशीशतानि । नव स्नायुशतानि । त्रीण्यस्थिशतानि । द्वे दशोत्तरे सन्धिशते । सप्तोत्तरं मर्म्मशतम् । चतुर्विंशतिर्धमन्यः । त्रयो दोषास्त्रयो मलाः । नव स्रोतांसि इति समासः ॥*॥ विस्तारोऽत उर्द्ध्वम् । त्वचोऽभिहिताः कला धातवो मला दोषो यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयं वृक्कौ च ॥*॥ आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम इति ॥*॥ सार्द्धत्रिव्यामान्यन्त्राणि पुंसां स्त्रीणामर्द्धव्यामहीनानि । श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि नराणां बहिर्मुखान्येतान्येव स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहञ्च ॥*॥ षोड़श कण्डरा तासाञ्चतस्रः पादयोस्तावत्यो हस्तग्रीवापृष्ठेषु । तत्र हस्तपादगतानां कण्डराणां नखाः प्ररोहाः ग्रीवाहृदयनिबन्धिनीनां अधोभागगतानां मेढ्रं श्रोणिपृष्ठनिबन्धिनीनां अधोभागगतानां विम्बः मूर्द्धोरुवक्षोऽक्षपिण्डादीनाञ्च मांससिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि चत्वारि । तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति । यैर्गवाक्षितमिदं शरीरम् ॥*॥ षट् कूर्च्चास्ते हस्तपादग्रीवामेढ्रेषु । हस्तयोर्द्वौ पादयोर्द्वौ ग्रीवामेढ्रयोरेकैकः । महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे ॥*॥ सप्त सेवन्यः । शिरसि विभक्ताः पञ्च जिह्वासेफसोरेकैका ताः परिहर्त्तव्याः शस्त्रेण ॥*॥ चतुर्द्दशास्थ्नां संघाताः । तेषां त्रयो गुल्फजानुवङ्क्षणेषु । एतेनेतरसक्थिबाहू च व्याख्यातौ । त्रिकशिरसोरेकैकः ॥*॥ चतुर्द्दशैव सीमन्ताः । ते चास्थिसंघातवद्गणनीया यतस्तैर्युक्ता अस्थिसंघाताः । ये ह्युक्ताः संघातास्तु खल्वष्टादशैकेषाम् ॥*॥ त्रीणि स षष्ठान्यस्थिशतानि वेदवादिनो भाषन्ते । शल्यतन्त्रे तु त्रीण्येव शतानि । तेषां सविंशमस्थिशतं शाखासु । सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोदरउरःसु । ग्रीवां प्रत्युर्द्ध्वं त्रिषष्टिः । एवमस्थ्नां त्रीणि शतानि पूर्य्यन्ते । एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश । तल कूर्च्चगुल्फसंश्रितानि दश । पाष्ण्यामेकम् । जङ्घायां द्वे । जानुन्येकम् । एकमूराविति । त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ । श्रोण्यां पञ्च तेषां गुदभगनितम्बेषु चत्वारि । त्रिकसंश्रितमेकम् । पार्श्वे षट्त्रिंशदेवमेकस्मिन् द्वितीयेऽप्येवम् । पृष्ठे त्रिंशत् । अष्टावुरसि । द्वे अक्षकसंज्ञे । ग्रीवायां नवकम् । कण्ठनाड्यां चत्वारि । द्वे हन्वोः । दन्ता द्वात्रिंशत् । नासायां त्रीणि । एकं तालुनि । गण्डकर्णशङ्खेष्वेकैकम् । षट् शिरसि । एतानि पञ्चविधानि भवन्ति । तद्यथा । कपालरुचकतरुणवलयनलकसंज्ञानि । तेषां जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि । दशनास्तु रुचकानि ॥ घ्राणकर्णग्रीवाक्षिकोषेषु तरुणानि । पाणिपादपार्श्वपृष्ठोदरोरःसु वलयानि । शेषाणि नलकसंज्ञानि ॥*॥ भवन्ति चात्र ।

"अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ।
अस्थीनि न विनश्यन्ति साराण्येतानि देहि-
नाम् ॥
मांसान्यत्र निबद्धानि शिराभिः स्नायुभिस्तथा ।
अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा ॥"

सन्धयस्तु द्विविधाश्चेष्टावन्तः स्थिराश्च ।

"शाखासु हन्वोः कट्याञ्च चेष्टावन्तस्तु सन्धयः ।
शेषास्तु सन्धयः सर्वे विज्ञेया हि स्थिरा बुधैः ॥"

संख्यातस्तु दशोत्तरे द्वे शते । तेषां शाखास्वष्टषष्टिरेकोनषष्टिः । कोष्ठे । ग्रीवां प्रत्युर्द्ध्वं त्र्यशीतिः । एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे ते चतुर्द्दश । जानुगुल्फवङ्क्षणेष्वेकैकः । एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ । त्रयः कटीकपालेषु । चतुर्विंशतिः पृष्ठवंशे । तावन्त एव पार्श्वयोः । उरस्यष्टौ । तावन्त एव ग्रीवायाम् । त्रयः कण्ठे । नाड़ीषु हृदयक्लोमनिबद्धास्त्वष्टादश । दन्तपरिमाणादन्तमूलेषु । एकः काकलके नासायाञ्च । द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ । गण्डकर्णशङ्खेष्वेकैकः । द्वौ हनुसन्धौ । द्वावुपरिष्टाद्भ्रुवोः शङ्खयोश्च । पञ्च शिरःकपालेषु । एको मूर्द्ध्नि ॥*॥ त एते सन्धयोऽष्टविधाः । कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः । कक्षावङ्क्षणदशनेषूदूखलाः । अंसपीठगुदभगनितम्बेषु सामुद्गाः । ग्रीवापृष्ठवंशयोः प्रतराः । शिरःकटीकपालेषु तुन्नसेवनी । हन्वोरुभयतस्तु वायसतुण्डाः । कण्ठहृदयनेत्रक्लोमनाड़ीषु मण्डलाः । श्रोत्रशृङ्गाटकेषु शङ्खावर्त्ताः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ।

"अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः ।
पेशीस्नायुशिरानान्तु सन्धिसंख्या न विद्यते ॥"

नवस्नायुशतानि । तासां शाखासु षट् शतानि । द्वे शते त्रिंशच्च कोष्ठे । ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः । एकैकस्यान्तु पादाङ्गुल्यां षट् निचितास्तास्त्रिंशत् । तावत्य एव तलकूर्च्चगुल्फेषु । तावत्य एव जंघायाम् । दश जानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे । शतमध्यर्द्धमेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ । षष्टिः कट्याम् । अशीतिः पृष्ठे । पार्श्वयोः षष्टिः । उरसि त्रिंशत् । षट्त्रिंशत् ग्रीवायाम् । मूर्द्ध्नि चतुस्त्रिंशत् । एवं नवस्नायुशतानि व्याख्यातानि ॥*॥ भवन्ति चात्र ।

"स्नायुश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे ।

प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥
प्रतानवत्यः शाखासु सर्व्वसन्धिषु चाप्यथ ।
वृत्तास्तु कण्डराः सर्व्वा विज्ञेयाः कुशलैरिह ॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु ।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥
नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता ।
भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता ॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः ।
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः ॥
न ह्यस्थीनि न वा पेश्यो न शिरा न च सन्धयः ।
व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम् ॥
यः स्नायूः प्रविजानाति वाह्याश्चाभ्यन्तरा-
स्तथा ।
स गूढं शल्यमाहर्त्तुं देहाच्छक्नोति देहि-
नाम् ॥" * ॥

पञ्च पेशीशतानि भवन्ति। तासां चत्वारि शतानि शाखासु। कोष्ठे षट्षष्टिः। ग्रीवां प्रत्यूर्द्ध्वञ्चतुस्त्रिंशत् एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश। दश प्रपदे। पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव। दश गुल्फतलयोः। गुल्फजान्वन्तरे विंशतिः। पञ्च जानुनि। विंशतिरूरौ। दश वङ्क्षणे। शतमेवमेकस्मिन् सक्थ्नि भवन्ति। एते नेतरसक्थिबाहू च व्याख्यातौ। तिस्रः पायौ। एका मेढ्रे। सेवन्यां चापरा। द्वे वृषणयोः। स्फिचोः पञ्च पञ्च। द्वे वस्तिशिरसि। पञ्चोदरे। नाभ्यामेका। पृष्ठोर्द्ध्वसंनिविष्टाः पञ्च पञ्च दीर्घाः। षट् पार्श्वयोः। दश वक्षसि। अक्षकांसौ प्रति समन्तात् सप्त। द्वे हृदयामाशययोः। षट् यकृत्प्लीहोण्डुकेषु। ग्रीवायाश्चतस्रः। अष्टौ हन्वोः। एकैका काकलकगलयोः द्वे तालुनि। एका जिह्वायाम्। ओष्ठयोर्द्वे। घोणायां द्वे। द्वे नेत्रयोः। गण्डयोश्चतस्रः। कर्णयोर्द्वे। चतस्रो ललाटे। एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ॥ * ॥
"सिरास्नाय्वस्थिपर्व्वाणि सन्धयश्च शरीरिणाम्।
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥"
स्त्रीणान्तु विंशतिरधिका। दश तासां स्तनयोरेकैकस्मिन्। पञ्च पञ्च यौवने तासां परिवृद्धिः। अपत्यपथे चतस्रस्तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते वाह्ये च प्रवृत्ते द्वे। गर्भच्छिद्रसंश्रितास्तिस्रः। शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव। पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति। तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिसिरास्नायुप्रच्छादका यथादेशं स्वभावतः एव भवन्ति ॥*
भवति चात्र।
"पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षण-
मुष्कजाः।
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥"
मर्म्मसिरा धमनीस्रोतसामन्यत्र प्रविभागः ॥
"शङ्खनाभ्याकृतिर्योनिः त्र्यावर्त्ता सा प्रकीर्त्तिता।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः।
तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥
आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः।
स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥
त्वक्पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः।
शल्य ज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥
तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता।
शोधयित्वा मृतं सम्यक् द्रष्टव्योऽङ्गविनिश्चयः ॥
प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टञ्च यद्भवेत्।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम् ॥"
तस्मात् समस्तगात्रमविषोपहतं अदीर्घव्याधिपीड़ितमवर्षशतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गं अप्रकाशे देशे कोथयेत्। सम्यक्प्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्रादुशीरवालवेणुवल्कलकुर्चीनामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्व्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा। श्लोकौ चात्र भवतः।
"न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥
शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः ॥"

षष्ठोऽध्यायः।

अथातः प्रत्येकमर्म्मनिर्द्देशं शारीरं व्याख्यास्यामः। सप्तोत्तरं मर्म्मशतम्। तानि मर्म्माणि पञ्चात्मकानि। तद्यथा। मांसमर्म्माणि सिरामर्म्माणि स्नायुमर्म्माणि। अस्थिमर्म्माणि। सन्धिमर्म्माणि चेति। न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति यस्मान्नोपलभ्यन्ते। तत्रैकादश मांसमर्म्माणि। एकचत्वारिंशत् शिरामर्म्माणि। सप्तविंशतिः स्नायुमर्म्माणि। अष्टावस्थिमर्म्माणि। विंशतिः सन्धिमर्म्माणि। तदेतत् सप्तोत्तरं मर्म्मशतम् ॥*॥ तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ। उदरोरसोर्द्वादश। चतुर्दश पृष्ठे ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशत्। तत्र सक्थिमर्म्माणि क्षिप्रतलहृदयकूर्चकूर्चशिरोगुल्फेन्द्रवस्तिजान्वाण्युर्व्वीलोहिताक्षाणि विटपञ्चेति। एतेनेतरसक्थि व्याख्यातम् ॥*॥ उदरोरसोस्तु। गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति। पृष्ठमर्म्माणि तु कटीकतरुणकुकुन्दर-नितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति। बाहुमर्म्माणि तु क्षिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रवस्तिकुर्पराण्युर्व्वीलोहिताक्षाणि कक्षधरञ्चेति। एतेनेतरो बाहुर्व्याख्यातः। जत्रूर्द्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृकाः। द्वे कृकाटिके। द्वे विधुरे। द्वौ फणौ। द्वावपाङ्गौ। द्वावावर्त्तौ। द्वावुत्क्षेपौ। द्वौ शङ्खावेका स्थपनी। पञ्च सीमन्ताः। चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति। तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्म्माणि। नीलधमनी-मातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतीलोहिताक्ष्योर्व्व्यः सिरामर्म्माणि। आणिविटपकक्षधरकूर्चकूर्चशिरोवस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्म्माणि। कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्म्माणि। जानुकुर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धिमर्म्माणि। तान्येतानि पञ्च विकल्पानि मर्म्माणि भवन्ति। तद्यथा। सद्यःप्राणहराणि। कालान्तरप्राणहराणि। विशल्यघ्नानि। वैकल्यकराणि। रुजाकराणीति। तत्र सद्यःप्राणहराण्येकोनविंशतिः। कालान्तरप्राणहराणि त्रयस्त्रिंशत्। त्रीणि विशल्यघ्नानि। चतुश्चत्वारिंशद्वैकल्यकराणि। अष्टौ रुजाकराणीति ॥ * ॥ भवन्ति चात्र।
"शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरोगुदम्।
हृदयं वस्तिनाभी च घ्नन्ति सद्योहतानि तु ॥
वक्षोमर्म्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः।
कटीकतरुणे सन्धी पार्श्वजौ बृहती च या ॥
नितम्बाविति चैतानि कालान्तरहराणि तु।
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्द्दिशेत् ॥
लोहिताक्षाणि जानूर्व्वी कूर्च्चा विटपकूर्पराः।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥
अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा।
वैकल्यकराण्याहुरावर्त्तौ द्वौ तथैव च ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान्।
क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥"
मर्म्माणि नाम मांसशिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति तस्मान्मर्म्मस्वभिहतास्तांस्तान् भावानापद्यन्ते। तत्र सद्यःप्राणहराण्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति। कालान्तरप्राणहराणि सौम्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति। विशल्यप्राणहराणि वायव्यानि शल्यमुखनिरुद्धो यावदन्तर्व्वायुस्तिष्ठति तावज्जीवत्युद्धृतमात्रे तु शल्ये मर्म्मस्थानाश्रितो वायुर्निष्क्रामति तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते। वैकल्यकराणि सौम्यानि सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति। रुजाकराण्यग्निवायुगुणभूयिष्ठानि विशेषतश्च तौ रुजाकरौ। पाञ्चभौतिकीञ्च रुजामाहुरेके। केचिदाहुर्म्मांसादीनां पञ्चानामपि समस्तानां विवृद्धानाञ्च समवायात् सद्यःप्राणहराणि। एकहीनानामल्पानां वा कालान्तरप्राणहराणि। द्विहीनानां विशल्यप्राणहराणि। त्रिहीनानां वैकल्यकराणि। एकस्मिन्नेव रुजाकराणीति। यतश्चैवमतोऽस्थिमर्म्मस्वप्यभिहतेषु शोणितागमनं भवति ॥ * ॥

"चतुर्व्विधा यास्तु शिरा शरीरे
प्रायेण ता मर्म्मसु सन्निविष्टाः ।
स्नायूस्थिमांसानि तथैव सन्धीन्
सन्तर्प्य देहं प्रतिपालयन्ति ॥
ततः क्षते मर्म्मणि ताः प्रवृद्धः
समन्ततो वायुरभिस्तृणोति ।
विवर्द्धमानस्तु स मातरिश्वा
रुजः सुतीव्राः प्रतनोति काये ॥
रुजाभिभूतन्तु पुनः शरीरं
प्रलीयते नश्यति चास्य संज्ञा ।
अतो हि शल्यं विनिहन्तुमिच्छन्
मर्म्माणि यत्नेन परीक्ष्य कर्षेत् ॥"

एतेन शेषं व्याख्यातम् । तत्र सद्यःप्राणहर-
मन्ते विद्धं कालान्तरेण मारयति । कालान्तर-
प्राणहरमन्ते विद्धं वैकल्यमापादयति । विशल्य-
प्राणहरमन्ते विद्धं कालान्तरेण क्लेशयति
रुजाञ्च करोति । रुजाकरमतीव्रवेदनं भवति ।
तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मार-
यन्ति । कालान्तरप्राणहराणि पक्षान्मासाद्वा ।
तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति ।
विशल्यप्राणहराणि वैकल्यकराणि च कदाचि-
दत्यभिहतानि मारयन्ति ॥ * ॥ अत ऊर्द्ध्वं
प्रत्येकशो मर्म्मस्थानान्यनुव्याख्यास्यामः । तत्र
पादाङ्गुष्ठाङ्गुल्योर्म्मध्ये क्षिप्रं नाम मर्म्म तत्र
विद्धस्याक्षेपकेण मरणम् । मध्यमाङ्गुलीमनु-
पूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम तत्रापि
रुजाभिर्म्मरणम् । क्षिप्रस्योपरिष्टादुभयतः कूर्च्चो
नाम यत्र पादस्य भ्रमणवेपने भवतः । गुल्फ-
सन्धेरध उभयतः कूर्च्चशिरो नाम तत्र रुजा-
शोफौ । पादजङ्घयोः सन्धाने गुल्फो नाम तत्र
रुजस्तब्धपादता खञ्जता वा । पार्ष्णिं प्रति
जङ्घामध्ये इन्द्रवस्तिर्नाम तत्र शोणितक्षये
मरणम् । जङ्घोर्व्वोः सन्धाने जानु नाम तत्र
खञ्जता जानुन ऊर्द्ध्वमुभयतस्त्र्यङ्गुलमाणिर्नाम
तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च । ऊरु-
मध्ये ऊर्व्वी नाम तत्र शोणितक्षयात् सक्थि-
शोषः । ऊर्व्या ऊर्द्ध्वमधोवङ्क्षणसन्धेरूरुमूले
लोहिताक्षं नाम तत्र लोहितक्षयेण पक्षा-
घातः । वङ्क्षणवृषणयोरन्तरे विटपं नाम तत्र
षाण्ढ्यमल्पशुक्रता वा भवति । एवमेतान्ये का-
दशसक्थिमर्म्माणि व्याख्यातानि । एतेनेतर-
सक्थिबाहू च व्याख्यातौ । विशेषतस्तु यानि
सक्थ्नि गुल्फजानुविटपानि तानि बाहौ मणि
बन्धकूर्परकक्षधराणि । यथा वङ्क्षणवृषणयो-
रन्तरे विटपमेवं वक्षःकक्षयोर्म्मध्ये कक्षधरं
तस्मिन् विद्धे त एवोपद्रवाः । विशेषतस्तु मणि-
बन्धे कुण्ठता । कुर्पराख्ये कुणिः । कक्षधरे
कक्षावातः । एवमेतानि चतुश्चत्वारिंशच्छाखासु
मर्म्माणि व्याख्यातानि ॥ * ॥ अत ऊर्द्ध्व-
मुदरोरसोर्म्मर्म्मस्थानान्यनुव्याख्यास्यामः । तत्र
वातवर्च्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म
तत्र सद्योमरणम् । अल्पमांसशोणितोऽभ्यन्तरतः

कट्यां मूत्राशयो वस्तिर्नाम तत्रापि सद्योमरण-
मश्मरीव्रणादृते । तत्राप्युभयतो भिन्ने न जीव-
त्येकतो भिन्ने मूत्रस्रावी व्रणो भवति । स तु
यत्नेनोपक्रान्तो रोहति । पक्वामाशययोर्म्मध्ये
सिराप्रभवा नाभिर्नाम तत्रापि सद्य एव मर-
णम् । स्तनयोर्म्मध्यमधिष्ठायोरस्यामाशयद्वारं
सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम तत्र सद्य
एव मरणम् । स्तनयोरधस्तात् द्व्यङ्गुलमुभयत-
स्तनमूले नाम मर्म्मणी तत्र कफपूर्णकोष्ठतया
कासश्वासाभ्यां म्रियते । स्तनचूचुकयोरूर्द्ध्वं
द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम तत्र
लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते
अंशकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ
नाम तत्र रक्तेन पूयभावं गतेन मरणम् ।
उभयोस्तत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम
तत्र वातपूर्णकोष्ठतया कासश्वासाभ्याञ्च मर-
णम् । एवमेतान्युदरोरसोर्द्वादश मर्म्माणि
व्याख्यातानि ॥ * ॥ अत ऊर्द्ध्वं पृष्ठमर्म्माण्यनु-
व्याख्यास्यामः । तत्र पृष्ठवंशमुभयतः प्रतिश्रोणी
काण्डमस्थीनि कटीकतरुणे नाम मर्म्मणी तत्र
शोणितक्षयात् पाण्डुर्व्विवर्णो हीनरूपश्च
म्रियते । पार्श्वजघनबहिर्भागे पृष्ठवंशमुभयतो
नातिनिम्ने कुकुन्दरे नाम मर्म्मणी तत्र स्पर्शा-
ज्ञानमधःकाये चेष्टोपघातश्च । श्रोणीकाण्डयो-
रुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ
नितम्बौ नाम तत्राधःकायशोषो दौर्व्बल्याच्च
मरणम् । अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्व-
मध्ययोस्तिर्य्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम
तत्र लोहितपूर्णकोष्ठतया म्रियते । स्तनमूला-
दुभयतः पृष्ठवंशस्य बृहती नाम तत्र शोणि-
तातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्म्रियते । पृष्ठोपरि
पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम तत्र
बाह्वोः स्वापः शोषो वा । बाहुमूर्द्धग्रीवामध्ये-
ऽंसपीठस्कन्धनिबन्धनावंसौ नाम तत्र स्तब्ध-
बाहुता । एवमेतानि चतुर्द्दश पृष्ठमर्म्माणि
व्याख्यातानि ॥ * ॥ अत ऊर्द्ध्वं जत्रुगतानि
व्याख्यास्यामः । तत्र कण्ठनाडीमुभयतश्चतस्रो
धमन्यो द्वे नीले द्वे च मन्ये व्यत्यासेन तत्र
मूकता स्वरवैकृतमरसग्राहिता च । ग्रीवाया-
मुभयतश्चतस्रः सिरामातृकास्तत्र सद्योमरणम्
शिरोग्रीवयोः सन्धाने कृकाटिके नाम तत्र
चलमूर्द्धता । कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम
तत्र बाधिर्य्यम् । घ्राणमार्गमुभयतः स्रोतोमार्ग-
प्रतिबद्धे अभ्यन्तरतः फणे नाम तत्र गन्धा-
ज्ञानम् । भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ
नाम तत्रान्ध्यं दृष्ट्युपघातो वा । भ्रुवोरुपरि-
निम्नयोरावर्त्तौ नाम तत्रान्ध्यं दृष्ट्युपघातश्च ।
भ्रुवोःपुच्छान्तयोरुपरिकर्णललाटयोर्म्मध्ये शङ्खौ
नाम तत्र सद्योमरणम् । शङ्खयोरुपरि केशान्त
उत्क्षेपौ नाम तत्र सशल्यो जीवति पाकात्
पतितशल्यो वा नोद्धृतशल्यः । भ्रुवोर्म्मध्ये स्थपनी
नाम तत्रोत्क्षेपवत् । पञ्च सन्धयः शिरसि

विभक्ताः सीमन्ता नाम तत्रोन्मादभयचित्त-
नाशैर्म्मरणम् । घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां
सिराणां मध्ये सिरासन्निपातः शृङ्गाटकानि
तानि चत्वारि मर्म्माणि तत्रापि सद्योमरणम् ।
मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो
रोमावर्त्तः अधिपतिस्तत्रापि सद्योमरणम् ।
एवमेतानि सप्तत्रिंशदूर्द्ध्वजत्रुगतानि मर्म्माणि
व्याख्यातानि ॥ * ॥ भवन्ति चात्र ।

"ऊर्व्व्यः शिरांसि विटपे च सकक्षपार्श्वे
एकैकमङ्गुलमिता स्तनपूर्व्वमूलम् ।
विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं
त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥
हृद्वस्तिकूर्च्चगुदनाभि वदन्ति मूर्द्ध्नि
चत्वारि पञ्च च गले दश यानि च द्वे ।
तानि स्वपाणितलकुञ्चितसंमितानि
शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम् ॥
एतत् प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः
शस्त्रेण कर्म्मकरणं परिहृत्य मर्म्म ।
पार्श्वाभिघातितमपीह निहन्ति मर्म्म
तस्माद्धि मर्म्मसदनं परिवर्ज्जनीयम् ॥
छिन्नेषु पाणिचरणेषु शिरा नराणां
सङ्कोचमीयुरसृगल्पमतो निरेति ।
प्राप्यामितव्यसनमुग्रमतो मनुष्याः
संछिन्नशाखतरुवन्निधनं न यान्ति ॥
क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं
गच्छत्यतीव पवनश्च रुजं करोति ।
एवं विनाशमुपयान्ति हि तत्र विद्धा
वृक्षा इवायुधविघातनिकृत्तमूलाः ॥
तस्मात्तयोरभिहतस्य तु पाणिपादं
छेत्तव्यमाशु मणिबन्धनगुल्फदेशे ।
मर्म्माणि शल्यविषयार्द्धमुदाहरन्ति
यस्माच्च मर्म्मसु हता न भवन्ति सद्यः ॥
जीवन्ति तत्र यदि वैद्यगुणेन केचित्
ते प्राप्नुवन्ति विकलत्वमसंशयं हि ।
सम्भिन्नजर्ज्जरितकोष्ठशिरःकपाला
जीवन्ति शस्त्रविहतैश्च शरीरदेशैः ।
छिन्नैश्च शक्थिभुजपादकरैरशेषै-
र्येषां न मर्म्मपतिता विविधाः प्रहाराः ॥

सोममारुततेजांसि रजःसत्त्वतमांसि च ।
मर्म्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ॥
मर्म्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः ।
इन्द्रियार्थेष्वसंप्राप्तिर्मतोबुद्धिविपर्य्ययः ॥
रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते ।
हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम् ॥
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति ।
हते वैकल्यजनने केवलं वैद्यनैपुणात् ॥
शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् ।
विशल्यघ्नेषु विज्ञेयं पूर्व्वोक्तं यच्च कारणम् ॥
रुजाकराणि मर्म्माणि क्षतानि विविधा रुजः ।
कुर्व्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि ॥
छेदभेदाभिघातेभ्यो दहनाद्दारणादपि ।
उपघातं विजानीयान्मर्म्मणान्तुल्यलक्षणम् ॥

मर्म्माभिघातश्च न कश्चिदस्ति
योऽल्पात्ययो वापि निरत्ययो वा।
प्रायेण मर्म्मस्वभिताड़ितास्तु
वैकल्यमृच्छन्त्यथवा म्रियन्ते॥
मर्म्माण्यधिष्ठाय हि ये विकारा
मूर्च्छन्ति काये विविधा नराणाम्।
प्रायेण ते कृच्छ्रतमा भवन्ति
नरस्य यत्नै रपि साध्यमानाः॥*॥"

सप्तमोऽध्यायः।

अथातः सिरावर्णनविभक्तिनाम शारीरं व्याख्यास्यामः। सप्त सिराशतानि भवन्ति। याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यते अनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः। द्रुमपत्रसेवनीनामिव च तासां प्रतानास्तासां नाभिर्मूलं ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च॥*॥ भवतश्चात्र।

"यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम्
नाभ्यां सर्व्वा निबद्धास्ता प्रतन्वन्ति समन्ततः॥
नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता।
सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः॥"

तासां मूलसिराश्चत्वारिंशत्। तासां वातवाहिन्यो दश। पित्तवाहिन्यो दश। कफवाहिन्यो दश। दश रक्तवाहिन्यः। तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति। तावत्य एव पित्तवाहिन्यः। पित्तस्थाने कफवाहिन्यश्च। कफस्थाने रक्तवाहिन्यश्च। यकृत्प्लीह्नोरेवमेतानि सप्तसिराशतानि तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः। एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासां गुदमेढ्राश्रिताः। श्रोण्यामष्टौ। द्वे द्वे पार्श्वयोः। षट् पृष्ठे। तावत्य एव चोदरे। दश वक्षसि। एकचत्वारिंशज्जत्रुण ऊर्द्ध्वम्। तासां चतुर्दश ग्रीवायाम्। कर्णयोश्चतस्रः। नव जिह्वायाम्। षट् नासिकायाम्। अष्टौ नेत्रयोः। एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां सिराणां व्याख्यातम्। एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश। कर्णयोर्द्वे। एवं रक्तवहा कफवहाश्च। एवमेतानि सप्तशिराशतानि सविभागानि व्याख्यातानि॥*॥

भवन्ति चात्र।

"क्रियाणामप्रतीघातममोहं बुद्धिकर्म्मणाम्।
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन्॥
यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते वातसम्भवाः॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्।
संसर्पत् स्वाः सिराः पित्तं कुर्य्याच्चान्यान् गुणानपि॥
यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः।
तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः॥
स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णताम्।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः शिराश्चरन्॥
यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्।
स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि
यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः॥
न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा।
श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः॥
प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम्।
ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः॥
तत्रारुणा वातवहाः पूर्य्यन्ते वायुना सिराः।
पित्ता दुष्टाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात्।
असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः॥
अत ऊर्द्ध्वं प्रवक्ष्यामि न विध्येद्याः सिरा भिषक्।
वैकल्यं मरणञ्चापि व्यधात्तासां ध्रुवं भवेत्॥
सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान्।
षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिञ्च मूर्द्धनि॥
शाखासु षोड़श सिराः कोष्ठे द्वात्रिंशदेव तु।
पञ्चाशज्जातुनश्चोर्द्ध्वमवेध्याः परिकीर्त्तिताः॥"

तत्र सिराशतमेकैकस्मिन् सक्थ्नि भवति तासां जालधरा त्वेका तिस्रश्चाभ्यन्तराः। तत्रोर्व्वीसंज्ञे द्वे लोहिताक्षसंज्ञा चैकैतास्त्ववेध्याः। एतेनेतरसक्थिबाहू च व्याख्यातावेवमशस्त्रकृत्याः षोड़श शाखासु। द्वात्रिंशत् श्रोण्यां तासामष्टावशस्त्रकृत्याः। द्वे द्वे विटपयोः कटीकतरुणयोश्च। अष्टावष्टावेकैकस्मिन् पार्श्वे तासामेकैकामूर्द्ध्वगां परिहरेत्। पार्श्वसन्धिगते च द्वे। चतस्रो विंशतिश्च पृष्ठवंशमुभयतस्तासामूर्द्ध्वगामिन्यौ द्वे द्वे परिहरेद्बृहती सिरे। तावत्य एवोदरे तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्। चत्वारिंशद्वक्षसि तासां चतुर्दशाशस्त्रकृत्या। हृदये द्वे द्वे। द्वे स्तनमूले। स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ। एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति। चतुःषष्टिशिराशतं जत्रुण ऊर्द्ध्वं भवति तत्र षट्पञ्चाशच्छिरोधरायां तासामष्टौ चतस्रश्च मर्म्मसंज्ञाः परिहरेत्। द्वे कृकाटिकयोः। द्वे विधुरयोः। एवं ग्रीवायां शोड़शाव्यध्याः। हन्वोरुभयतोऽष्टावष्टौ तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत्। षट्त्रिंशज्जिह्वायां तासामधः षोड़शाशस्त्रकृत्याः रसवहे द्वे वाग्वहे च द्वे। द्विर्द्वादश नासायां तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येकां मृदावुद्देशे। अष्टात्रिंशदुभयोर्नेत्रयोस्तासामेकैकामपाङ्गयोः परिहरेत्। कर्णयोर्दश तासां शब्दवाहिनीनामेकैकां परिहरेत्। नासानेत्रगतास्तु ललाटे षष्टिस्तासां केशान्तानुगताश्चतस्रः। आवर्त्तयोरेकैका स्थपन्याश्चैका परिहर्त्तव्या। शङ्खयोर्दश तासां शङ्खसन्धिगतामेकैकां परिहरेत्। द्वादश मूर्द्ध्नि तासामुत्क्षेपयोर्द्वे परिहरेत् सीमन्तेष्वेकैकामधिपताविति। एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्द्ध्वमिति। भवति चात्र।

"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः।
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्॥"

अष्टमोऽध्यायः।

अथातः सिराव्यधविधिशारीरं व्याख्यास्यामः। बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तस्त्रीमद्याध्वकर्षितमत्तवान्तविरिक्तास्थापितानुवासितप्रजागरितक्लीवकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीड़ितानाञ्च सिरां न विध्येत्। याश्चाव्यध्या व्यध्याश्चादृष्टा दृष्टाश्चायन्त्रिता यन्त्रिताश्चानुत्थिता इति। शोणितावसेकसाध्याश्च विकाराः प्रागभिहितास्तेषु चापक्वेष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायञ्च सिरां विध्येत्। प्रतिषिद्धानामपि च विषोपसर्गे आत्ययिकेषु सिराव्यधनमप्रतिषिद्धम्। तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकद्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानवाधमानो वस्त्रपट्टचर्म्मान्तर्वल्कललतानामन्यतमेन यन्त्रयित्वा नातिगाढ़ं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा सिरां विध्येत्॥*॥

"नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते।
सिराणां व्यधनं कार्य्यमरोगे वा कदाचन॥"

तत्र व्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परसन्धिद्वयस्योपरि हस्तावन्तर्गूढ़ाङ्गुष्ठकृतमुष्टीमन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात् स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्यो ब्रूयाद्दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टयत्यसृक्स्रावणार्थं यन्त्रं पृष्ठमध्ये च पीड़येदिति कर्म्म पुरुषञ्च वायुपूर्णमुखं स्थापयेदेष उत्तमाङ्गगतानामन्तर्मुखवर्ज्यानां सिराणां व्यधेन यन्त्रणविधिः। तत्र पादव्यध्यसिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत्सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्य गुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुलं प्लोतादीनामन्यतमेन बद्ध्वा पादसिरां विध्येत्। अथोपरिष्टाद्धस्तौ गूढ़ाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्व्ववद्यन्त्रं बद्ध्वा हस्तसिरां विध्येत्। गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परः स्यात्। श्रोणीपृष्ठस्कन्धेषून्नामितपृष्ठस्यावाक्शिरस्कस्य उपविष्टस्य विस्फुर्जितपृष्ठस्य विध्येत्। उदरोरसोः प्रसारितोरस्कस्योन्नमितशिरस्कस्य

विस्फूर्जितदेहस्य बाहुभ्यामवलम्ब्यमानदेहस्य पार्श्वयोः। अवनामितमेढ्रस्य मेढ्रे। उन्नामितविदष्टजिह्वाग्रस्याधोजिह्वायाम्। अतिव्यात्ताननस्य तालुनि दन्तमूलेषु च। एवं यन्त्रोपायानन्यांश्च सिरोत्थापनहेतून् बुद्ध्यावेक्ष्य शरीरवशेन व्याधिवशेन च विदध्यात्। मांसलेष्ववकाशेषु यवमात्रं शस्त्रं निदध्यादतोऽन्येष्वर्द्धयवमात्रं व्रीहिमात्रं वा व्रीहिमुखेन। अस्थ्नामुपरि कुठारिकया विध्येदर्द्धयवमात्रम् भवन्ति चात्र।

"अनभ्रे वर्षासु विध्येत ग्रीष्मकाले तु शीतले।
हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः॥
सम्यक् शस्त्रनिपातेन धारया या सवेदसृक्।
मुहूर्त्तं रुद्धा तिष्ठेच्च सुविद्धान्तां विनिर्द्दिशेत्॥
यथा कुसुम्भपुष्पेभ्यः पूर्वं स्रवति पीतिका।
तथा सिरासु विद्धासु दुष्टमग्रे प्रवर्त्तते॥
मूर्च्छितस्यातिभीतस्य श्रान्तस्य तृषितस्य च।
न वहन्ति सिरा विद्धास्तथानुत्थितयन्त्रिताः।
क्षीणस्य बहुदोषस्य मूर्च्छया विद्रुतस्य च।
भूयोऽपराह्णे विस्राव्या सापरेद्युस्त्र्यहेऽपि वा॥
रक्तं सशेषदोषन्तु कुर्य्यादपि विचक्षणः।
न चातिप्रस्रुतं कुर्य्याच्छेषं संशमनैर्जयेत्॥
बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः।
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे॥"

तत्र पाददाहपादहर्षाववाहुकटिप्यविसर्पवातशोणितवातकण्टकविचर्च्चिकापाददारीप्रभृतिषु क्षिप्रमर्म्मण उपरिष्टात् द्व्यङ्गुले व्रीहिमुखेन सिरां विध्येत्। श्लीपदे तच्चिकित्सिते यथा वक्ष्यते। क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले। अपच्यामिन्द्रवस्तेरधस्ताद्द्व्यङ्गुले। जानुसन्धेरुपर्य्यधो वा चतुरङ्गुले गृध्रस्याम्। ऊरुमूलसंश्रितान्तु गलगण्डे। एतेनेतरसक्थिबाहू च व्याख्यातौ॥ विशेषतस्तु वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीह्नि कनिष्ठिकानामिकयोर्मध्ये वा एवं दक्षिणबाहौ यकृद्दाल्ये कफोदरे चैतामेव च कासश्वासयोरप्यादिशन्ति। गृध्रस्यामिव विश्वाच्याम्। श्रोणिप्रति समन्तात् द्व्यङ्गुले प्रवाहिकायां शूलिन्यां परिकर्त्तिकोपदंशशूकदोषशुक्रव्यापत्सु मेढ्रमध्ये। वृषणयोः पार्श्वे मूत्रवृद्ध्याम्। नाभेरधश्चतुरङ्गुले सेवन्या वामपार्श्वे दकोदरे वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च। बाहुशोषावबाहुकयोरप्येके वदन्त्यंसयोरन्तरे। त्रिकसन्धिमध्यगतां तृतीयके अधःस्कन्धसन्धिगतामन्यतरपार्श्वसंस्थिताञ्चतुर्थके। हनुसन्धिमध्यगतामपस्मारे। शङ्खकेशान्तसन्धिगतामुरोऽपाङ्गललाटेषु चोन्मादेऽपस्मारे च। जिह्वारोगेष्वधोजिह्वायां दन्तव्याधिषु च तालुनि तालव्येषु। कर्णयोरुपरि समन्तात् कर्णशूले तद्रोगेषु च। गन्धाग्रहणे नासारोगेषु च नासाग्रे तिमिराक्षिपाकप्रभृतिष्वाक्षिरोगेषूपनासिके। ललाट्यामपाङ्ग्यां चैता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति॥ * ॥ अत ऊर्द्ध्वं दुष्टव्यधनं अनुव्याख्यास्यामः। तत्र दुर्विद्धातिविद्धा कुञ्चिता पिच्चिता कुट्टिता प्रस्रुता अत्युदीर्णा अन्तेऽभिहता परिशुष्का कूणिता वेपिता अनुत्थिताविद्धा शस्त्रहता तिर्य्यग्विद्धा अविद्धा अव्याध्या विद्रुता धेनुका पुनः पुनर्विद्धा शिरास्नाय्वस्थिसन्धिमर्म्मसु चेति विंशतिर्दुष्टव्यधाः। तत्र या सूक्ष्मशस्त्रविद्धा न व्यक्तमसृक् स्रवति रुजा शोफवती च सा दुर्विद्धा। प्रमाणातिरिक्तविद्धायामन्तः प्रविशति शोणितं शोणितातिप्रवृत्तिर्वा सातिविद्धा। कुञ्चितायामप्येवम्। कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता। अनासादिता पुनःपुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता। शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रस्रुता। तीक्ष्णा महामुखशस्त्रविद्धा अत्युदीर्णा। अल्परक्तस्राविण्यन्ते विद्धा अन्तेऽभिहता। क्षीणशोणितस्यानिलपूर्णा परिशुष्का। चतुर्भागावसादिता किञ्चित्प्रवृत्तशोणिता कूणिता। दुःस्थानबन्धनाद्वेपमानायाः शोणितसम्मोहो भवति सा वेपिता। अनुत्थितविद्धायामप्येवम्। छिन्नातिप्रवृत्तशोणिता क्रियासङ्करी शस्त्रहता। तिर्य्यक् प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्य्यग्विद्धा। बहुशः क्षता हीनशस्त्रप्रणिधानेनाविद्धा। अशस्त्रकृत्या अव्याध्या अनवस्थितविद्धा विद्रुता। प्रदेशस्य बहुशोऽवघट्टनादारोयव्यधा मुहुर्मुहुःशोणितस्रवा धेनुका। सूक्ष्मशस्त्रव्यधनाद्बहुशो विच्छिन्ना पुनःपुनर्विद्धा। स्नाय्वस्थिशिरासन्धिमर्म्मसु विद्धा वा रुजां शोषं वैकल्यं मरणं वापादयति॥ * ॥ भवन्ति चात्र।

"सिरासु शिक्षितो नास्ति चला ह्येताः स्वभावतः।
मत्स्यवत् परि वर्त्तन्ते तस्माद्यत्नेन ताड़येत्॥
अजानता गृहीते तु शस्त्रे कायनिपातिते।
भवन्ति व्यापदश्चैता बहवश्चाप्युपद्रवाः॥
स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि।
यान्त्याशु व्याधयः शान्तिं यथा सम्यक् सिराव्यधात्॥
सिराव्यधश्चिकित्सार्द्धं शल्यतन्त्रे प्रकीर्त्तितः।
यथा प्रणिहितः सम्यक् वस्तिः कायचिकित्सिते॥"

तत्र स्निग्धस्विन्नवान्तविरिक्तास्थापितानुवासितसिराविद्धैः परिहर्त्तव्यानि। क्रोधायासमैथुनदिवास्वप्नवाग्व्यायामयानोत्थानासनचंक्रमणशीतवातातपविरुद्धासात्म्याजीर्णान्याबललाभान्मासमेके मन्यन्ते॥ * ॥ एतेषां विस्तरमुपरिष्टाद्वक्ष्यामः। भवतश्चात्र।

"सिराविषाणतुम्बैस्तु जलौकाभिः पदैस्तथा।
अवगाढं यथापूर्वं निर्हरेद्दुष्टशोणितम्॥
अवगाढे जलौका स्यात् प्रच्छन्नं पिण्डिते हितम्
सिराङ्गव्यापके रक्ते शृङ्गालावुस्त्वचि स्थिते॥"

## नवमोऽध्यायः।

अथातो धमनीव्याकरणं शारीरं व्याख्यास्यामः। चतुर्व्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः। तत्र केचिदाहुः सिराधमनीस्रोतसामविभागः सिराविकारा एव धमन्यः स्रोतांसि चेति। तत्तु न सम्यक्। अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः कस्माद्व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्म्मवैशेष्यादागमाच्च केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्म्मसु भवति। तासान्तु नाभिप्रभवाणां धमनीनामूर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः। ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन्विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश शब्दरूपरसगन्धानष्टाभिर्गृह्णीते। द्वाभ्यां भाषते च द्वाभ्यां घोषं करोति द्वाभ्यां स्वपिति द्वाभ्यां प्रतिबुध्यते। द्वे चास्तुवाहिन्यौ। द्वे स्तन्यं स्त्रिया वहतस्तेन संश्रिते ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः। तास्त्वेतास्त्रिंशत्। सविभागा व्याख्याताः। एताभिरूर्द्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्य्यन्ते याप्यन्ते च॥ * ॥ भवति चात्र।

"ऊर्द्ध्वं गतास्तु कुर्वन्ति कर्म्माण्येतानि सर्व्वशः।
अधोगमास्तु वक्ष्यामि कर्म्म तासां यथायथम्॥"

अधोगमास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो वहन्ति। तास्तु पित्ताशयमभिप्रतिपन्नास्तत्रस्थमेवान्नपानरसं विपक्वमौष्ण्याद्विरेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्त्यर्पयन्ति चोर्द्ध्वगतानां तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्ति मूत्रपुरीषस्वेदांश्च विरेचयन्त्यामपक्वाशयान्तरे च त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोनितरसान् द्वे द्वे वहतः ता दश द्वे अन्नवाहिन्यावन्त्राश्रिते तोयवहे द्वे मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे शुक्रवहे द्वे शुक्रप्रादुर्भावाय द्वे विसर्गाय ते एव रक्तमभिवहतो नारीणामार्त्तवसंज्ञम्। द्वे वर्च्चोनिरसन्यौ स्थूलान्त्रप्रतिबद्धे। अष्टावन्यास्तिर्य्यग्गानां धमनीनां स्वेदमर्पयन्ति। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः। एताभिरधोनाभेः पक्वाशयकटीमूत्रपुरीषगुदवस्तिमेढ्रसक्थीनि धार्य्यन्ते याप्यन्ते च॥ * ॥ भवति चात्र।

"अधोगमास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः
तिर्य्यग्गाः संप्रवक्ष्यामि कर्म्म तासां यथायथम्॥"

तिर्य्यग्गानान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते तास्त्वसंख्येयास्ताभिरिदं शरीरं गवाक्षितं विवद्धमाततञ्च। तासां मुखानि रोमकूपप्रतिबद्धानि यैः स्वेदमभिवहन्ति रसञ्चापि सन्तर्पयन्त्यन्तर्बहिश्च

तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याख्यन्तः शरीरमभिपद्यन्ते त्वचि विपक्कानि। तैरेव स्पर्शसुखमसुखं वा गृह्णाति। तास्त्वेतास्त्रतस्रो धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याताः। भवतश्चात्र।

"यथा स्वभावतः खानि मृणालेषु विसेषु च।
धमनीनां तथा खानि रसो यैरुपचीयते॥
पञ्चाभिभूतास्त्वथ पञ्चकृत्वः
पञ्चेन्द्रियं पञ्चसु भावयन्ति।
पञ्चेन्द्रियं पञ्चसु भावयित्वा
पञ्चत्वमायान्ति विनाशकाले॥"*॥

अत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः। तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि येष्वधिकार एतेषां बहूनि। एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः। तत्र विद्धस्य क्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति। अन्नवहे द्वे तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यस्तत्र विद्धस्याध्मानं शूलान्नद्वेषौ छर्द्दिः पिपासान्ध्यं मरणं वा। उदकवहे द्वे तयोर्मूलं तालुक्लोम च। तत्र विद्धस्य पिपासा सद्योमरणञ्च। रसवहे द्वे तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यस्तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च। रक्तवहे द्वे तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यस्तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता चेति। मांसवहे द्वे तयोर्मूलं स्नायुत्वचं रक्तवहाश्च धमन्यस्तत्र विद्धस्य श्वयथुर्मांसशोषः सिराग्रन्थयो मरणम्। मेदोवहे द्वे तयोर्मूलं कटीवृक्कौ च तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च। मूत्रवहे द्वे तयोर्मूलं वस्तिर्मेढ्रञ्च तत्र विद्धस्यानद्धवस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च। पुरीषवहे द्वे तयोर्मूलं पक्वाशयो गुदञ्च तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च। शुक्रवहे द्वे तयोर्मूलं स्तनौ वृषणौ च तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च। आर्त्तववहे द्वे तयोर्मूलं गर्भाशयः आर्त्तववाहिन्यश्च धमन्यस्तत्र विद्धाया वन्ध्यात्वं मैथुनासहिष्णुत्वमार्त्तवनाशश्च। सेवनीच्छेदाद्रुजाप्रादुर्भावः। वस्तिगुदविद्धलक्षणं प्रागुक्तमिति। स्रोतोविद्धन्तु प्रत्याख्यायोपचरेदुद्धृतशल्यन्तु क्षतविधानेनोपचरेत्।

"मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत्।
स्रोतस्तदिति विज्ञेयं सिराधमनिवर्ज्जितम्॥"

दशमोऽध्यायः।

अथातो गर्भिणीव्याकरणं शारीरं व्याख्यास्यामः। गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेन्मलिनविकृतहीनगात्राणि न स्पृशेद्दुर्गन्धदुर्दर्शनानि



परिहरेदुद्वेजनीयाश्च कथाः शुष्कं पर्य्युषितं कुथितं क्लिन्नं चान्नं नोपभुञ्जीत। वहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्कारांश्च भारानुच्चैर्भाष्यादिकं परिहरेद्यानि च गर्भं व्यापादयन्ति। न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत। न चायासयेच्छरीरं पूर्व्वोक्तानि च परिहरेत्। शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात्। हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत् सामान्यमेतदा प्रसवात्॥*॥ विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेच्चतुर्थे दध्ना पञ्चमे पयसा षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्टम्। षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद्यवागूं वा। सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धमेवमाप्याय्यते गर्भः। अष्टमे वदरोदकेन बलातिबलाशतपुष्पपललपयोदधिमस्तु तैललवणमदनफलमधुघृतमिश्रेणास्थापयेत्। पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदाप्रसवकालादेवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते। नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ। तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु विल्वन्यग्रोधतिन्दुकभल्लातकनिर्म्मितं सर्व्वागारं यथासंख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारमुदग्द्वारं दक्षिणद्वारं वाष्टहस्तायतञ्चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम्॥*॥

"जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने।
सशूले जघने नारी ज्ञेया सा तु प्रजायिनी॥"

तत्रापस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च। प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सघृतां यवागूमाकण्ठात् पाययेत्। ततः कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति॥*॥ अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्यात् ब्रूयाच्चैनामेका सुभगे प्रवाहस्वेति न चाप्राप्तावी प्रवाहस्व विशिखान्तरमपत्यमार्गम्। ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणवस्तिशिरःसु प्रवाहेथाः शनैः शनैः। ततो गर्भनिर्गमे प्रगाढं ततो गर्भे योनिमुखं प्रपन्ने गाढतरमाविशल्यभावात्॥*॥

अकालप्रवाहणात् वधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जनयति। तत्र प्रतिलोममनुलोमयेत् गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्म्मोकेण पिण्डीतकेन वा। बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोर्धारयेत् सुवर्च्चलां विशल्यां वा॥*॥ अथ जातस्योल्वं मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्द्ध्नि पिचुं दद्यात् ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्धा छेदयेत् तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग्बध्नीयात्॥*॥ अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्म्मणि कृते मधुसर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्ततो बलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादेशं यथाविभवं च।

"धमनीनां हृदिस्थानां विवृतत्वादनन्तरम्।
चतूरात्रात्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते॥"

तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद्द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च। ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं पाययेत्॥*॥ अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिःक्वाथेनोपचरेत् सशेषदोषान्तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचव्यचूर्णं गुडोदकेनोष्णेन पाययेत्। एवं द्विरात्रं त्रिरात्रं वा कुर्य्यादादुष्टशोणितात्। विशुद्धे ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत् त्रिरात्रम्। ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद्बलमग्निबलञ्चावेक्ष्य। अनेन विधिना अध्यर्द्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात्। पुनरार्त्तवदर्शनादित्येके। धन्वभूमिजातां सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत्। पिप्पल्यादिकषायानुपाना स्नेहनित्या च स्यात्त्रिरात्रं पञ्चरात्रं वा बलवती। अबलां यवागूं पाययेत्त्रिरात्रं पञ्चरात्रं वा अत ऊर्द्ध्वं स्निग्धेनान्नसंसर्गेणोपचरेत्। प्रायशश्चैनां प्रभूतेनोष्णोदकेन परिषिञ्चेत्। क्रोधायासमैथुनादीन् परिहरेत्॥*॥ भवतश्चात्र।

"मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते।
स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात्॥
तस्मात्तां देशकालौ च व्याधिसात्म्येन कर्म्मणा।
परीक्ष्योपचरेदेवं नैयमत्ययमाप्नुयात्॥*॥"

अथापरापतन्त्यानाहाध्मानौ कुरुते तस्मात् कण्ठमस्याः केशवेष्टितयाङ्गुल्या प्रमृजेत्। कटुकालावुकृतवेधनसर्षपसर्पनिर्म्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत्। लाङ्गलीमूलकल्केन वास्याः पाणिपादतलमालिम्पेत्। मूर्द्ध्नि वास्या

शारीरं
शारीरं

महावृक्षक्षीरमनुषेचयेत् । कुष्ठलाङ्गलीमुल-
कल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत् ।
शालिमूलकल्कं वा पिप्पल्यादिं वा मद्येन
सिद्धार्थककुष्ठलाङ्गलीमहावृक्षक्षीरमिश्रेण सुरा-
मण्डेन वा स्थापयेत् । एतैरेव सिद्धेन सिद्धा-
र्थकतैलेनोत्तरवस्तिं दद्यात् । स्निग्धेन वा कृत्त-
नखेन हस्तेनापहरेत् । प्रजातायाश्च नार्य्या
रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना
तद्देशगेनातिसंरुद्धं नाभेरधःपार्श्वयोर्वस्तौ वा
अस्थ्नि वा शिरसि वा ग्रन्थिं करोति । ततश्च
नाभिवस्त्युदरपृष्ठशूलानि भवन्ति । सूचीभिरिव
निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः ।
समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति
मक्कललक्षणम् । तत्र वीरतर्व्वादिसिद्धं जल-
भूषकादिप्रतिवापं पाययेत् । यवक्षारचूर्णं वा
सर्पिषा सुखोदकेन वा लवणचूर्णं वा पिप्पल्या-
दिक्वाथेन पिप्पल्यादिचूर्णं वा सुरामण्डेन
वरुणादिक्वाथं वा पञ्चकोलैलाप्रतीवापं पृथक्
परूर्ष्यादिक्वाथं वा भद्रदारुमरिचसंसृष्टं पुराण-
गुड़ं वा त्रिकटुकचतुर्जातककुस्तुम्बुरुमिश्रं
खादेदच्छं वा पिवेदरिष्टमिति ॥*॥ अथ बालं
क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां
शाययेत् । पीलुवदरीनिम्बपरूषकशाखाभिश्चैनं
वीजयेत् । मुर्द्ध्नि चास्याहरहस्तैलपिचुमवचा-
रयेत् । धूपयेच्चैनं रक्षोघ्नैर्धूपैः । रक्षोघ्नानि
चास्य पाणिपादशिरोग्रीवास्ववसृजेत् । तिला-
तसीसर्षपकणांश्चात्र प्रकिरेत् । अधिष्ठाने चाग्निं
प्रज्वालयेत् । व्रणितोपासनीयञ्चावेक्षेत । ततो
दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ
स्वस्तिवाचनं कृत्वा नाम कुर्य्यातां यदभिप्रेतं
नक्षत्रनाम वा ॥ * ॥ ततो यथावर्णन्धात्री-
मुपेयान्मध्यमप्रमाणां मध्यमवयसामरोगां शील-
वतीमचपलामलोलुपामकृशामस्थूलां प्रसन्न-
क्षीरां अलम्बौष्ठीमलम्बोर्द्ध्वस्तनीमव्यङ्गामव्यस-
निनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्म्मिणीं
कुले जातामतो भूयिष्ठैश्च गुणैरन्वितां श्यामा-
मारोग्यबलवृद्धये बालस्य । तत्रोर्द्ध्वस्तनी
करालं कुर्य्यात् । लम्बस्तनी नासिकामुखं
छादयित्वा मरणमापादयेत् । ततः प्रशस्तायां
तिथौ शिरःस्नातामहतवाससमुदङ्मुखं शिशु-
मुपवेश्य धात्रीं प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं
धौतमीषत्परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाय-
येत् ॥*॥

"चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः ।
भवन्तु सुभगे नित्यं बालस्य बलवृद्धये ॥
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने ।
दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥"

अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्याद्व्याधि-
जन्म भवति । अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णा-
स्तनपानादुत्क्षुहितस्रोतसः शिशोः कासश्वास-
वमीप्रादुर्भावः । तस्मादेवं विधानं स्तन्यं न पाय-
येत् । क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्य-
नाशो भवति ॥*॥ अथास्याः क्षीरजननार्थं सौम-
नस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरस-
सुरासौवीरकपिण्याकलशुनमत्स्यकसेरुकशृङ्गा-
टक-विसविदारिकन्दमधुक-शतावरी-नालिका-
लावूकालशाकप्रभृतीनि विदध्यात् ॥ * ॥
अथास्याः स्तन्यमप्सु परीक्षेत । तच्चेच्छीतल-
ममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं
गच्छत्यफेनिलमतन्तुमन्नोत्प्लवते न सीदति वा
तच्छुद्धमिति विद्यात्तेन कुमारस्यारोग्यं शरीरो-
पचयो बलवृद्धिश्च भवति । न च क्षुधित-
शोकार्त्त-श्रान्तप्रदुष्टधातुगर्भिणीज्वरितातिक्षी-
णातिस्थूल-विदग्ध-भक्तविरुद्धाहार-तर्पितायाः
स्तन्यं पाययेन्नाजीर्णौषधञ्च बालं दोषौषध-
मलानां तीव्रवेगोत्पत्तिभयात् ॥ * ॥ भवन्ति
चात्र ।

"धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा ।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥
मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः
दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः ॥
भवन्ति कुशलस्तांश्च भिषक् सम्यक् विभावयेत् ।
अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ॥
मुहुर्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति ।
निमीलिताक्षो मूर्द्धस्थे शिरोरोगे न धारयेत् ॥
वस्तिस्थे मूत्रसङ्गार्त्तो रुजा तृष्यति मूर्च्छति ।
विण्मूत्रसङ्गवैवर्ण्यच्छर्द्याध्मानान्त्रकूजनैः ।
कोष्ठे दोषात् विजानीयात् सर्व्वत्रस्थांश्च
रोदनैः ॥"

तेषु च यथाभिहितं मृदुच्छेदनीयमौषधं
मात्रया क्षीरपस्य जीरसर्पिषा धात्र्याश्च
केवलमेव विदध्यात् । क्षीरान्नादस्यात्मनि
धात्र्याश्चान्नादस्य कषायादीनात्मन्येव न
धात्र्याः । तत्र मासादूर्द्ध्वं क्षीरपायाङ्गुलि-
पर्वद्वयग्रहणसम्मितामौषधमात्रां विदध्यात्
कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय
कोलसम्मितामन्नादायेति ॥ * ॥

"येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः ।
तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥
एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे ।
स्तन्यपायाहितं सर्पिरितराभ्यां यथार्थतः ॥
न च तृष्णाभयादत्र पाययेत शिशुं स्तनौ ।
विरेकवस्तिवमनान्यृते कुर्य्याच्च नात्ययात् ॥
मस्तुलुङ्गक्षयाद्यस्य वायुस्ताल्वस्थि नामयेत् ।
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ॥
पानाभ्यञ्जनयोर्योज्यं शीताम्बुदेजनं तथा ।
वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम्
मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः ।
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥"

क्षीराहाराय सर्पिः पाययेत् सिद्धार्थकवचा-
मांसी-पयस्यापामार्गशतावरीशारिवाब्राह्मीपि-
प्पलीहरिद्राकुष्ठसैन्धवसिद्धम् । क्षीरान्नादाय
मधुकवचापिप्पलीचित्रकत्रिफलासिद्धम् । अन्ना-
दाय द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचमधु-
विड़ङ्गद्राक्षाद्विब्राह्मीसिद्धम् । तेनारोग्यबल-
मेधायूंषि शिशोर्भवन्ति ॥ * ॥ बालं पुनर्गात्र-
सुखं गृह्णीयान्न चैनं तर्जयेत् सहसा न प्रति-
बोधयेद्वित्रासभयात् । सहसा नापहरेदुत्क्षि-
पेद्वा वातादिविघातभयात् । नोपवेशयेत् कौब्ज्य-
भयान्नित्यं चैनमनुवर्त्तेत प्रियशतैरजिघांसुः ।
एवमनभिहतमनास्त्वभिवर्द्धते नित्यमुदग्रसत्त्व-
सम्पन्नो नीरोगः सुप्रसन्नमनाश्च भवति । वाता-
तपविद्युत्प्रभापादपलता-दर्शन-दीपावलोकन-
शून्यागारनिम्नस्थानगृहच्छायादिभ्यो दुर्ग्र-
होपसर्गतश्च बालं रक्षेत् ॥ * ॥

"नाशुचौ विसृजेद्बालं नाकाशे विषमे न च ।
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च ॥
क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा ।
दद्यादास्तन्यपर्य्याप्तेर्बालानां वीक्ष्य मात्रया ॥"

षण्मासञ्चैनमन्नं प्राशयेल्लघु हितञ्च । नित्य-
मवरोधरतश्च स्यात् कृतरक्ष उपसर्गभयात् ।
प्रयत्नतश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति ॥
अथ कुमार उद्विजते त्रस्यति रोदिति नष्ट-
संज्ञो भवति नखदशनैर्धात्रीमात्मानञ्च परि-
णुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ
विक्षिपत्यूर्द्ध्वं निरीक्षते फेनमुद्वमति सन्दष्टौष्ठः
क्रूरो भिन्नामवर्च्चादीनार्त्तस्वरो निशि जागर्त्ति
दुर्बलो म्लानाङ्गो मत्स्यच्छुच्छुन्दरीमत्कुणगन्धो
यथा पुरा धात्र्याः स्तन्यमभिलषति तथानाभि-
लषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तं
विस्तरेणोत्तरे वक्ष्यामः ॥*॥ शक्तिमन्तञ्चैनं
ज्ञात्वा यथावर्णं विद्यां ग्राहयेत् । अथास्मै
पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत्
पित्र्यधर्म्मार्थकामप्रजाः प्राप्स्यतीति ॥*॥

"ऊनषोड़शवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेत् जीवेद्वा दुर्बलेन्द्रियः ।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥"

अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारे-
णोपसृष्टायां गर्भाधानं नैव कुर्वीत । पुरुष-
स्याप्येवंविधस्य त एव दोषाः संभवन्ति । तत्र
पूर्व्वोक्तैः कारणैः पतिष्यति गर्भे गर्भाशयकटी-
वङ्क्षणवस्तिशूलानि रक्तदर्शनञ्च । तत्र शीतैः
परिषेकावगाह-प्रदेहादिभि-रुपचरेज्जीवनीय-
शृतशीतक्षीरपानैश्च । गर्भस्फुरणे मुहुर्मुहु-
स्तत्सन्धारणार्थं क्षीरमुत्पलादिसिद्धं पाययेत् ।
प्रस्रंसमाने सदाहपार्श्वपृष्ठशूलासृग्दरानाह-
मूत्रसङ्गाः । स्थानात् स्थानञ्चोपक्रामति गर्भे
कोष्ठे संरम्भस्तत्र स्निग्धाः शीता क्रियाः वेद
नायां महासहाक्षुद्रसहामधुकश्वदंष्ट्राकण्ट-
कारिकासिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत् ।
मूत्रसङ्गे दर्भादिसिद्धम् । आनाहे हिङ्गुसौवर्च्चल-
लशुनवचासिद्धम् । अत्यर्थं स्रवति रक्ते कोष्ठा-
गारिकागारमृत्पिण्डसमङ्गाधातकीकुसुमनव-
मालिकागैरिकसर्ज्जरसरसाञ्जनचूर्णं मधुना-

वलिह्यात् । यथालाभं न्यग्रोधादित्वक् प्रवालकल्कं वा पयसा पाययेदुत्पलादिकल्कं वा कशेरुशृङ्गाटकशालूककल्कं वा शृतेन पयसोदुम्बरफलोदककान्दकाथेन वा शर्करामधुमधुरेण शालिपिष्टं न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत् ॥*॥ अथादृष्टशोणितवेदनायां मधुकदेवदारुपयस्यासिद्धं पयः पाययेत् तदेवाश्मन्तकशतावरीपयस्यासिद्धं विदारिगन्धादिसिद्धं वा बृहतीद्वयोत्पलशतावरीसारिवापयस्यामधुकसिद्धं पयस्यार्कपुष्पीसिद्धं वा पयः पाययेदिति । एवं क्षिप्रमुपक्रान्ताया उपावर्त्तन्ते रुजो गर्भश्चाप्यायते । व्यवस्थिते च गर्भे गव्येनोडुम्बरशलाटुसिद्धेन पयसा भोजयेत् । अतीते लवणस्नेहवर्ज्जाभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत यावन्तो मासा गर्भस्य तावन्त्यहानि । वस्त्युदरशूलेषु पुराणगुड़ं दीपनीयसंयुक्तं पाययेदरिष्टं वा वातोपद्रवगृहीतत्वात् । स्रोतसां लीयते गर्भः सोऽतिकालमवतिष्ठमानो व्यापद्यते तं मृदुना स्नेहादिक्रमेणोपचरेत् । उत्क्रोशरससंसिद्धामनल्पस्नेहां यवागूं पाययेत् । माषतिलविल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेन्मधुमाध्वीकं चानुपिबेत् सप्तरात्रम् । कालातीतस्थायिनि गर्भे विशेषतः सधान्यमुदूखलं मुषलेनाभिहन्यात् विषमे वा यानासनं सेवेत । वाताभिपन्न एव शुष्यति गर्भः । स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत् । शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरम् । तत् कदाचित् यदृच्छयोपशान्तं नैगमेयापहृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुस्तत्रापि लीनवत् प्रतीकारः ॥*॥ अत ऊर्द्ध्वं मासानुमासिकं वक्ष्यामः ।

"मधुकं शाकवीजञ्च पयस्या सुरदारु च ।
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी ॥
वृक्षादनी पयस्या च लता चोत्पलसारि वा ।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥
बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम् ।
पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका ॥
शृङ्गाटकं विसं द्राक्षा कशेरु मधुकं सिताः ।
वत्सैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः ॥
यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः ।
कपित्थबृहतीविल्वपटोलेक्षुनिदिग्धिकाः ॥
मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे ।
नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥
क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम् ।
सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च ।
एवमाप्याय्यते गर्भस्तीव्रा रुक् चोपशाम्यति ॥"

निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्द्ध्वं प्रसवमानाया नार्य्याः कुमारोऽल्पायुर्भवति ॥*॥ अथ गर्भिणीं व्याध्युत्पत्तावत्यये छर्द्दयेन्मधुराम्लेनान्नोपहितेनानुलोमयेच्च संशमनीयञ्च मृदु विदध्यादन्नपानयोरश्नीयाच्च मृदुवीर्य्यं मधुरप्रायं गर्भाविरुद्धञ्च गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः ॥*॥ भवन्ति चात्र ।

"सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतञ्च वा ।
मत्स्याक्षकः शङ्खपुष्पी मधु सर्पिः सकाञ्चनम् ॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा ।
हेमचूर्णानि कैटर्य्यः श्वेता दूर्वा घृतं मधु ॥
चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि ।
कुमाराणां वपुर्मेधाबलबुद्धिविवर्द्धनाः ॥"

इति सुश्रुत आयुर्वेदशास्त्रे तृतीयं शारीरस्थान समाप्तम् ॥ इङ्गरेजीभाषायां एनाटोमीत्युक्तमेतत् ॥*॥ शारीरं तपो यथा,—

"देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम् ।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥"

इति भगवद्गीतायाम् १७ अध्यायः ॥

**शारीरकं**, क्ली, (शरीरमेव शारीरं कुत्सितत्वात् तन्निवासो शारीरको जीवस्तमधिकृत्य कृतो ग्रन्थः । शारीरक + अण् ।) वेदव्यासकृतवेदान्तमीमांसासूत्रम् । यथा । तथा च वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः । वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम् । अथातो ब्रह्मजिज्ञासेति । इति शङ्करभाष्यम् ॥ (शरीरमेव शरीरकं तत्र भवम् । शरीरक + अण् । शरीरभवे, त्रि । यथा, भागवते । ३ । ३१ । १९ ।

"पश्यत्ययं धिषणया ननु सप्तवध्रिः
शारीरके दमशरीर्य्यपरः स्वदेहे ॥")

**शारीरिकः**, त्रि, ( शरीर + ठक् । ) शरीरसम्बन्धि । तत्पर्य्यायः । कालेवरिकः २ गात्रिकः ३ वापुषिकः ४ सांहननिकः ५ वार्ष्मिकः ६ वैग्रहिकः ७ कायिकः ८ दैहिकः ९ मौर्त्तिकः १० तानविकः ११ । इति अमरोक्तशरीरपर्य्यायशब्दात् ष्णिकप्रत्ययेन निष्पन्नमिदम् ॥

**शारुकः**, त्रि, (शृणातीति । शॄ + "लषपतपदस्थेति ।" ३ । २ । १५४ । इति उकञ् ।) हिंसकः । शॄस्थाभूकम गमेत्यादिना उकप्रत्ययेन निष्पन्नमिदम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, मुग्धबोधे कारकप्रकरणे ।

"दृष्ट्वा दधिं शारुकमेतदर्ज्जकान्
उन्नीतवन्तं यतिभिः सुदर्शनम् ॥")

**शार्कः**, पुं, शर्करा । इति शब्दरत्नावली ॥

**शार्ककः**, पुं, दुग्धफेनः । शर्करापिण्डम् । इति मेदिनी ॥

**शार्करः**, पुं, दुग्धफेनः । शर्करास्त्यत्रेति । शर्करा + "देशे लुबिलचौ च ।" ५ । २ । १०५ । इति अण् । ) शर्करान्वितदेशः । इति मेदिनी ॥ शर्करासम्बन्धिनि, त्रि ॥ (शर्करैव । "शर्करादिभ्योऽण् ।" ५ । ३ । १०७ । इत्यण् । शर्करासदृशम् ॥ इति काशिका ॥*॥ "सिकताशर्कराभ्यां च ।" ५।२।१०४ । इति अणि शर्कराविशिष्टञ्च ॥ यथा, शार्करं मधु । इति च काशिका ॥ )

**शार्करकः** } **शार्करिकः** } त्रि, शर्करावहुलदेशः । शर्कराशब्दात् कण्प्रत्ययेन ष्णिकप्रत्ययेन च निष्पन्नः ॥

**शार्करीयः**, त्रि, शर्करायुक्तदेशः । शर्कराशब्दात् णीयप्रत्ययेन निष्पन्नमिदम् ॥

**शार्ङ्गं**, क्ली, आर्द्रकम् । इति राजनिर्घण्टः ॥ (शृङ्गस्य विकारः । शृङ्ग + अण् ।) विष्णुधनुः । धनुर्मात्रम् । इति मेदिनी । गे, २६ ॥ (यथा, रघुः । ४ । ६२ ।

"शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥")

शृङ्गसम्बन्धिनि, त्रि ॥

**शार्ङ्गष्टा**, स्त्री, महाकरञ्जः । इति राजनिर्घण्टः ॥ पुस्तकान्तरे शार्ङ्गेष्ठा इति च पाठः ॥

**शार्ङ्गी**, [न्] पुं, (शार्ङ्गमस्यास्तीति । शार्ङ्ग + इनिः । ) विष्णुः । इत्यमरः ॥ ( यथा, रघुः । १२ । ७० ।

"स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥")

धन्विमात्रम् । इति शार्ङ्गशब्दार्थदर्शनात् ॥

**शार्द्दूलः**, पुं, (शॄ हिंसायाम् + "स्वर्ज्जिपिञ्जादिभ्य ऊरोलचौ ।" उणा० ४ । ९० । इति ऊलच् प्रत्ययेन साधुः । ) व्याघ्रः । उत्तरपदे श्रेष्ठार्थवाचकः । इत्यमरः ॥ राक्षसः । पशुभेदः । स तु सरभः । इति मेदिनी ॥ पक्षिविशेषः । इति धरणिः ॥ चित्रकः । इति राजनिर्घण्टः ॥

**शार्द्दूलललितं**, क्ली, धृतिवृत्तौ अष्टादशाक्षरपादच्छन्दोविशेषः । यथा,—

"मः सो जः स-त-सा दिनेश ऋतुभिः शार्द्दूलललितम् ।
कृत्वा कंसमृगे पराक्रमविधिं शार्द्दूलललितं
यश्चक्रे क्षितिभारकारिषु सुररातिष्वतिदवम् ।
सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं
श्रेयो वः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥"

इति छन्दोमञ्जरी २ स्तवकः ॥

**शार्द्दूलवाहनः**, पुं, पञ्चविंशतिपूर्व्वजिनान्तर्गतजिनविशेषः । इति त्रिकाण्डशेषः ॥

**शार्द्दूलविक्रीड़ितं**, क्ली, अतिधृतिवृत्तौ ऊनविंशतिपादच्छन्दोविशेषः । यथा,—

"सूर्य्याश्वैर्म-स-ज-स्त-ताः सगुरवः शार्द्दूलविक्रीड़ितम् ।
गोविन्दं प्रणमोत्तमाङ्ग रसने त्वं घोषयाहर्निशं
पाणी पूजयतं मनः स्मर पदे तस्यालयं गच्छतम् ।
एवञ्चेत् कुरुताखिलं मम हितं शीर्षोदयस्तद्ध्रुवं
न प्रेक्ष्ये भवतां कृते भवमहाशार्द्दूलविक्रीड़ितम् ॥"

इति छन्दोमञ्जरी २ स्तवकः ॥

शालग्रा
शालग्रा

शार्व्वरं, क्ली, अन्धतमसम्। घातुके, त्रि। इति मेदिनी॥ (शर्व्वर्य्या इदम्। शर्व्वरी+अण्।) शर्व्वरीसम्बन्धिनि, त्रि॥

शर्व्वरी, स्त्री, रात्रिः। इत्यमरटीकायां भरतधृतवाचस्पतिः॥

शाल, ङ ऋ कत्थने। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-सेट्।) कत्थनं प्रशंसायाम्। ङ, शालते गुणिणं गुणी। ऋ, अशशालत्। इति दुर्गादासः।

शाल, पुं, (शल्यते प्रशंस्यते इति। शाल+घञ्।) मत्स्यभेदः। गजाड़ इति ख्यातः। प्राकारः। वृक्षविशेषः। तत्पर्य्यायः। सर्जः २ कार्श्यः ३ अश्वकर्णकः ४ शस्यसम्बरः ५। इत्यमरः॥ शङ्कुवृक्षः ६। इति रत्नमाला॥ नदभेदः। इति शब्दरत्नावली॥ शालनृपः। स तु शालिवाहनराजः। इति विश्वः॥ वृक्षमात्रम्। इति राजनिर्घण्टः॥*॥ शालो झसे धीवर एव द्रास इत्युष्मभेदात्तालव्यादिः। दन्त्यादिश्च। कैवर्त्त इव बहुराजीवोत्पलसालो वसन्तकाल आजगाम। इति वासवदत्तश्लेषात्। कैवर्त्तपक्षे सालो मत्स्यविशेषः। वसन्तपक्षे सालस्य पुष्पं सालम्। इति भरतः॥

शालग्रामः, पुं, विष्णुमूर्त्तिविशेषः। स च गण्डक्युद्भववज्रकीटकृतचक्रयुक्तशिला द्वारकोद्भवतादृशशिला च। तस्य माहात्म्यलक्षणादि यथा,—

"प्रसङ्गात् कथयिष्यामि शालग्रामशिलार्च्चनम्
निष्कामो मुक्तिमाप्नोति मूर्त्तिं ध्यायन् स्तुवन् जपन्॥
शङ्खचक्रगदापद्मं केशवाख्यो गदाधरः।
साब्जकौमोदकीचक्रशङ्खी नारायणो विभुः॥
स च शङ्खाब्जपदो माधवः श्रीगदाधरः।
गदाब्जशङ्खचक्री वा गोविन्दाख्यो गदाधरः॥
पद्मशङ्खादिगदिने विष्णुशङ्खाय वै नमः।
सशङ्खाब्जगदाचक्रमधुसूदनमूर्त्तये॥
नमो गदासिचक्राब्जयुक्ताय त्रिविक्रमाय च।
सारिकौमोदकीपद्मशङ्खवामनमूर्त्तये॥
शङ्खाब्जचक्रगदिने नमः श्रीधरमूर्त्तये।
हृषीकेश सारिगदाशङ्खपद्मिन्नमोऽस्तु ते॥
साब्जशङ्खगदाचक्रपद्मनाभस्वरूपिणे।
दामोदर शङ्खगदाचक्रपद्मिन्नमोऽस्तु ते॥
सारिशङ्खगदाब्जाय वासुदेव नमो नमः।
शङ्खाब्जचक्रगदिने दमः सङ्कर्षणाय च॥
शङ्खचक्रगदाब्जाय धृतप्रद्युम्नमूर्त्तये।
नमोऽनिरुद्धाय गदाशङ्खाब्जवरधारिणे॥
साब्जशङ्खगदाचक्रपुरुषोत्तममूर्त्तये।
नमोऽधोक्षजरूपाय गदाशङ्खविधारिणे॥
नृसिंहमूर्त्तये पद्मगदाशङ्खविधारिणे।
पद्मारिशङ्खगदिने नमोऽस्त्वच्युतमूर्त्तये॥
सशङ्खचक्राब्जगदं जनार्द्दनमिहो नमः।
उपेन्द्रं गदिनं सारिपद्मशङ्ख नमोऽस्तु ते।
सचक्राब्जगदाशङ्खयुताय हरिमूर्त्तये।
सगदाब्जारिशङ्खाय नमः श्रीकृष्णमूर्त्तये॥
शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक्।
शुक्लाभाख्यश्च सोऽव्याद्वः सदैव श्रीगदाधरः॥
लग्नद्विचक्रो चक्राभः पूर्व्वभागस्तु पुष्कलः।
सङ्कर्षणोऽथ प्रद्युम्नः सूक्ष्मचक्रस्तु पीतकः॥
स दीर्घः स शिरश्छिद्रो योऽनिरुद्धस्तु वर्त्तुलः।
नानाहारद्विरेखश्च अथ नारायणोऽसितः॥
मध्ये गदाकृता रेखा नाभिपद्ममहोन्नतः।
पृथुचक्रो नृसिंहो वः कपिलोऽव्यात्त्रिबिन्दुकः॥
अथवा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचारिणः।
वराहशक्तिलिङ्गोऽव्याद्विषमद्वयचक्रकः॥
नीलस्त्रिरेखः स्थूलोऽथ कूर्म्ममूर्त्तिः सबिन्दुमान्।
कृष्णः सवर्त्तुलावर्त्तः पाण्डरोन्नतपृष्ठकः॥
श्रीधरः पञ्चरेखोऽव्याद्वनमालागदाङ्कितः।
वामनो वर्त्तुलो नाम वामचक्रः सुरेश्वरः॥
नानावर्णोऽनेकमूर्त्तिर्नागभोगी त्वनन्तकः।
स्थूलो दामोदरो नीलो मध्ये चक्रः सुनीलकः॥
संकीर्णद्वारको वोऽव्यादथ ब्रह्मा सुमोहितः।
सदीर्घरेखा शुषिर एकचक्राम्बुजः पृथुः॥
प्रत्युच्छिद्रः स्थूलचक्रः कृष्णोऽबिन्दुश्च बिन्दुमत्।
हयग्रीवोऽङ्कुशाकारः पञ्चरेखः समन्ततः॥
वैकुण्ठोऽमलवद्भाति एकचक्रात्मकोऽसितः।
मत्स्यो दीर्घाम्बुजाकारो द्वाररेखस्तु पाण्डरः॥
वामचक्रो दक्षरेखः श्यामो वोऽव्यात्त्रिविक्रमः
शालग्रामे द्वारकायां स्थिताय गदिने नमः॥
एकेन लक्षितो वोऽव्याद्गदाधारी सुदर्शनः।
लक्ष्मीनारायणो द्वाभ्यां त्रिभिर्मूर्त्तिस्त्रिविक्रमः॥
चतुर्भिश्च चतुर्व्यूहो वासुदेवश्च पञ्चभिः।
प्रद्युम्नः षड्भिरेवाव्यात् सङ्कर्षण इतः स्तुतः॥
पुरुषोत्तमोऽष्टभिः स्याच्च नवव्यूहो नवान्वितः।
दशावतारो दशभिरनिरुद्धोऽवतादथ।
द्वादशात्मा द्वादशभिरत ऊर्द्ध्वं ह्यनन्तकः॥"

इति पाद्मे पातालखण्डे १० अध्यायः॥

अपि च।

ईश्वर उवाच।

"शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च।
नित्यन्तु श्रीहरेः पूजा केवलेन जलेन तु॥
गण्डक्यामेकदेशे तु शालग्रामस्थलं महत्।
पाषाणान्तर्भवं यत्तत् शालग्राममिति स्थितम्॥
शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनम्।
किं पुनर्जननं तत्र हरेः सान्निध्यकारणम्॥
शालग्रामैकयजनात् शतलिङ्गफलं लभेत्।
बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत्॥
गोष्पदेन च चिह्नेन तेन वै त्रायते नरः।
आदौ शिलां परीक्षेत स्निग्धां श्रेष्ठाञ्च मेचकाम्॥
अकृष्णा मध्यमा प्रोक्ता मिश्रा मिश्रफलप्रदा।
सर्व्वकामप्रदा सौम्या कराला भयदुःखदा॥
स्निग्धा च श्रीकरी नित्यं रूक्षा दारिद्र्यदायिका।
क्षुद्रा क्षुद्रफला प्रोक्ता स्थूला स्थूलफलप्रदा॥
सदा काष्ठे स्थितो वह्निर्मन्थने च प्रकाशते।
यथा तथा हरिर्व्यापी शालग्रामे प्रकाशते॥
प्रत्यहं द्वादश शिलाः शालग्रामस्य योऽर्च्चयेत्।
द्वारवत्याः शिलायुक्ताः स वैकुण्ठे महीयते॥
शालग्रामशिलायान्तु गह्वरं लक्ष्यते नरः।
पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पान्तरं दिवि॥
शालग्रामशिला यत्र यत्र द्वारवती शिला।
मृते विष्णुपुरं याति कृतार्थं योजनत्रयम्॥
जपपूजा च होमश्च सर्व्वं कोटिगुणं भवेत्।
मनस्कामः सदाभीष्टं क्रोशमात्रं समन्ततः॥
कीकटेऽपि मृतो याति वैकुण्ठभवनं नरः।
शालग्रामशिलायां यो मूल्यमुत्पादयेन्नरः॥
विक्रेता चानुमन्ता च यः परीक्षानुमोदकः।
सर्व्वे ते नरकं यान्ति यावदाहूतसंप्लवम्।
अतस्तं वर्ज्जयेद्देवि! हरिविक्रयणक्रमम्।
शालग्रामोद्भवो देवो यो देवो द्वारकोद्भवः।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः॥
द्वारकोद्भवः शुक्लश्च बहुचक्रेण चिह्नितः।
चक्रमासीत् शिवाकारचित्स्वरूपनिरञ्जनम्॥
नमोऽस्त्वोङ्काररूपाय सदानन्दस्वरूपिणे।
शालग्रामे महाभाग भक्तस्यानुग्रहं कुरु।
त्वया युतस्य धर्म्मस्य ऋणग्रस्तस्य मे प्रभो॥"

इति तत्रैव ११ अध्यायः

अपरञ्च।

ब्राह्मण उवाच।

"गण्डकीयं नदी राजन्! सुरासुरनिसेविता।
पुण्योदकपरीवाहैर्हतपातकसञ्चया॥
दर्शनान्मानसं पापं स्पर्शनात् कर्म्मजं दहेत्।
वाचिकं स्वीयतोयस्य पानतः पापसञ्चयम्॥
पुरा दृष्टाः प्रजा नाथः प्रजाःसर्व्वा विपाप्मनः।
स्वगण्डाद्विप्रुषोऽनेकपापघ्नीं सृष्टवानिमाम्॥
एनां नदीं ये पुण्योदां स्पृशन्ति सुतरङ्गिणीम्।
ते गर्भभाजो नैव स्युरपि पापकृतो नराः॥
तस्यां भवा ये चाश्मनश्चक्रचिह्नैरलङ्कृताः।
ते साक्षाद्भगवन्तो हि स्वस्वरूपधराः पराः॥
शिलाः संपूजयेद्यस्तु नित्यं चक्रयुताः सदा।
न जातुचिज्जनन्या वै जठरं समुपाविशेत्॥
पूजयेद् यो नरो धीमान् शालग्रामशिलां वराम्।
तेनाचारवता भाव्यं दम्भमोहवियोगिना॥
परदारपरद्रव्यविमुखेन नरेण च।
पूजनीयः प्रयत्नेन शालग्रामः सचक्रकः॥
द्वारवत्या भवं चक्रं शिला वै गण्डकीभवा।
पुंसां क्षणाद्धरन्त्येव पापं जन्मशतार्ज्जितम्॥
अपि पापसहस्राणां कर्त्ता तावन्नरो भवेत्।
शालग्रामशिला आपः पीत्वा पूयेत तत्क्षणात्॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वेदपथे स्थितः।
शालग्रामं पूजयित्वा गृहस्थो मोक्षमाप्नुयात्॥
न कदाचित् स्त्रिया कार्य्यं शालग्रामस्य पूजनम्
भर्त्तृहीनाथ सुभगा सर्व्वलोकहितैषया॥
मोहात् स्पृशेत सा महिला जन्मशीलगुणान्विता।
हित्वा पुण्यसमूहन्तु सत्वरं नरकं व्रजेत्॥
स्त्रीपाणिमुक्तपुष्पाणि शालग्रामशिलोपरि।

र[illegible]कपापानि वदन्ति ब्राह्मणोत्तमाः ॥
चन्दनं विषपङ्काभं कुङ्कुमं वज्रसन्निभम् ।
नैवेद्यं कालकूटाभं भवेद्भगवतः कृतम् ॥
तस्मात् सर्व्वात्मना त्याज्यः स्त्रियाः स्पर्शः शिलोपरि ।
कुर्व्वती याति नरकं यावदिन्द्राश्चतुर्दश ॥*॥
अपि पापसमाचारो ब्रह्महत्यायुतोऽपि वा ।
शालग्रामशिलातोयं पीत्वा याति परां गतिम् ॥
तुलसी चन्दनं चक्रं शङ्खो घण्टाथ चक्रकम् ।
शिला ताम्रस्य पात्रन्तु विष्णोर्नाम पदामृतम् ॥
पदामृतन्तु नवभिः पापराशिप्रदाहकम् ।
वदन्ति मुनयः शान्ताः सर्व्वशास्त्रार्थकोविदाः ॥
सर्व्वतीर्थपरिस्नानात् सर्व्वक्रतुसमर्च्चनात् ।
पुण्यं भवति यद्राजन् बिन्दौ बिन्दौ तदद्भुतम् ॥
शालग्रामशिला यत्र पूज्यते पुरुषोत्तमैः ।
तत्र योजनमात्रन्तु तीर्थकोटीसमन्वितम् ॥*॥
शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि ।
विषमा एव पूज्या वै विषमेषु त्रयं न हि ॥
द्वारवतीभवं चक्रं तथा वै गण्डकीभवम् ।
उभयोः सङ्गमो यत्र तत्र गङ्गा समुद्रगा ॥
रूक्षाः कुर्व्वन्ति पुरुषान् आयुः श्रीभिर्विवर्ज्जितान् ।
तस्मात् स्निग्धा मनोहारिरूपेण ददति श्रियम् ॥
आयुष्कामो नरो यस्तु धनकामोऽपि यः पुमान् ।
पूजयन् सर्व्वमाप्नोति पापं लौकिकमैहिकम् ॥
प्राणान्तकाले तु यस्य भवेद्भाग्यबलान्नृप ।
वाचि नाम हरेः पुण्यं शिलाकृतिस्तदन्तिके ॥
गच्छतस्तु प्राणमार्गेषु यस्य विश्रम्भतोऽपि चेत् ।
शालग्रामशिलामूर्त्तिस्तदा मुक्तिर्न संशयः ॥
पुरा भगवता प्रोक्तमम्बरीषाय धीमते ।
ब्राह्मणो न्यासिनो भक्ताः शालग्रामशिला मम ॥
स्वरूपत्रितयं मह्यमेतद्धि क्षितिमण्डले ।
पापिनां पापनिवारं कर्त्तुं धृतमुदञ्चताम् ॥
निन्दन्ति पापिनो ये वा शालग्रामशिलां सकृत् ।
कुम्भीपाके पचन्त्याशु यावदाहूतसंप्लवम् ॥
पूजां समुद्यतं कर्त्तुं यो वारयति मूढधीः ।
तस्य माता पिता बन्धुः सर्व्वे नरकगामिनः ॥
यो वै कथयति श्रेष्ठं शालग्रामार्च्चनं कुरु ।
स कृतार्थो नयत्याशु वैकुण्ठं स्वन्तु पूर्व्वजैः ॥"
इति च तत्रैव २० अध्यायः ॥*॥
अन्यच्च ।
श्रीईश्वर उवाच ।
"शालग्रामशिलायान्तु त्रैलोक्यं सचराचरम् ।
सदा वसति तेनात्र विष्णुस्तिष्ठति सर्व्वदा ॥
शालग्रामशिलापूजां प्रकुरुष्व षडानन ।
गङ्गामिव महापुण्यां चतुर्व्वर्गफलप्रदाम् ॥
दृष्टेन मनसा येन स्थापिता पूजिता तथा ।
यज्ञकोटिसमं पुण्यं आशु तस्मै प्रयच्छति ॥
छिन्नस्तेन महासेन गर्भवासः सुदारुणः ।
पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥
कामासक्तोऽपि यो नित्यं भक्तिभावविवर्ज्जितः ।
शालग्रामशिलां पश्येत् तस्य पापक्षयो भवेत् ॥
शालग्रामशिला विप्र हत्याकोटिविनाशिनी ।
स्मृता संकीर्त्तिता ध्याता पूजिता च नमस्कृता ॥
शालग्रामशिलां दृष्ट्वा यान्ति पापानि देहिनाम् ।
सिंहं दृष्ट्वा यथा यान्ति वने मृगगणा भयात् ॥
नमस्कृत्वा तु यः कुर्य्यात् शालग्रामशिलार्च्चनम् ।
भक्त्या वा यदि वाभक्त्या स मुक्तिं समवाप्नुयात् ॥
यः सेवां कुरुते नित्यं शालग्रामशिलाग्रतः ।
वैवस्वताद्भयं तस्य न स्यान्मरणजन्मनी ॥
शालग्रामशिलाचक्रं पयोदधिघृतादिकैः ।
यः स्नापयति नूनं स कल्पकोटिं वसेद्दिवि ॥
शालग्रामे नमस्कारो भावेनापि च यैः कृतः ।
मानवाः किं करिष्यन्ति मद्भक्त्या ते महीतले ॥
मद्भक्तिरणदर्पिष्ठा मत्प्रभुं न नमन्ति ये ।
वैष्णवास्ते न विज्ञेया मद्भक्ताः पापमोहिताः ।
शालग्रामशिला यत्र तत्र पुत्र वसाम्यहम् ॥
पूजितोऽहं न तैर्मर्त्यैः स्थापितश्च न तैर्नरैः ।
न कृतं मर्त्यलोके यैः शालग्रामशिलार्च्चनम् ॥
किमर्च्चितैर्लिङ्गशतैर्विष्णुभक्तिबहिष्कृतैः ।
शालग्रामशिलाचक्रं नार्च्चितं यदि पुत्रक ॥
जन्मकोटिसहस्रेण पूजिते मयि यत् फलम् ।
तत् फलं समवाप्नोति शालग्रामशिलार्च्चनात् ॥
अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलादृष्टं सर्व्वं याति पवित्रताम् ॥
नैवेद्यं मे न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।
भुक्त्वा केशवनैवेद्यं कोटिभक्तिफलं लभेत् ॥
सकृदभ्यर्च्चितो विष्णुः शालग्रामशिलास्थितः ।
ददाति विपुलां मुक्तिं सर्व्वसङ्गविवर्ज्जिताम् ॥
मल्लिङ्गकोटिभिर्दृष्टैर्यत् फलं पूजितैः स्तुतैः ।
तत्फलं समवाप्नोति शालग्रामैकपूजनात् ॥
शालग्रामशिलाचक्रं यो विद्वान् पश्यति ध्रुवम् ।
अर्च्चयेद्वैष्णवो नित्यं तस्य पुण्यं निबोध मे ॥
कोटिलिङ्गसहस्रैर्यत् पूजितैर्जाह्नवीतटे ।
काशीवासाद्युगान्यष्टौ दिनेनैकेन तद्भवेत् ॥
तस्माद्भक्त्यैव मद्भक्तैः प्रीत्यर्थं मम पुत्रक ।
कर्त्तव्यं सर्व्वदा मर्त्यैः शालग्रामशिलार्च्चनम् ॥
शालग्रामशिलारूपी यत्र तिष्ठति केशवः ।
तत्र देवाः सुरा यक्षा भुवनानि चतुर्दश ॥
शालग्रामशिलाग्रे यैः सकृच्छ्राद्धं कृतं भवेत् ।
वसन्ति पितरस्तेषां विष्णुलोके न संशयः ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥
प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ।
चान्द्रायणैः किं हि तादृक् पीत्वा पादोदकं शुचिः ॥"

इति पाद्मे उत्तरखण्डे १२७ अध्यायः ॥ * ॥
कलेर्दशसहस्रवर्षानन्तरं स च भारतं त्यक्त्वा यास्यति । यथा,—
"शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६ अध्यायः ॥ * ॥

तस्योत्पत्तिलक्षणादि यथा,—
"शालग्रामसमुत्पत्तिं शृण्वन्तु परमाद्भुताम् ।
गण्डक्या प्राक् तपस्तप्तं भवन्तु मम देवताः ॥
सर्व्वाः पुत्राः सुखं दातुं जनानामिति ते सुराः ।
तस्यास्तु तपसा हृष्टा ब्रह्मविष्णुमहेश्वराः ॥
वरं दातुं समुद्युक्ता वव्रे सा स्वस्य पुत्रताम् ।
अशक्तास्ते वरं दातुं तदा शप्तास्तया क्रुधा ॥
प्रतारणं मम सुराः कृतं यस्मात् पुनः पुनः ।
कीटयोनिं प्रपद्येथाः क्रुद्धास्ते ह्यशपंस्तु ताम् ॥
अविचार्य्य वयं शप्तास्त्वया यत्तपसोद्धता ।
तेन कर्म्मविपाकेन जडा कृष्णा नदी भव ॥
अन्योन्यशापं श्रुत्वेत्थं महान् कोलाहलोऽभवत् ।
प्रकम्पिताः सुराः सा च ब्रह्माणन्तं व्यजिज्ञपत् ॥
ब्रह्मन् त्राहि महाशापादन्योन्यपतितात् क्रुधा
इति देववचः श्रुत्वा ब्रह्मा शङ्करमब्रवीत् ॥
शिवः प्रोवाच धातारमहं संहारकारकः ।
त्वं सृष्टिकर्त्ता विष्णुस्तु पालको बुद्धिमत्तरः ॥
स प्रष्टव्यो यथासङ्गमुभयोः सम्भवेदिति ।
इति माहेश्वरं श्रुत्वा वचनं विष्णुरब्रवीत् ॥
शृणु ब्रह्मन् महादेव शृणु देव गजानन ।
मद्गणौ ब्राह्मणौ ग्राहमातङ्गौ शापतोऽत्र तु ॥
भविष्यतस्तयोर्म्मोक्षं भविष्यामि कलेवरम् ।
शीर्णं भविष्यति यदा तन्मे दोमज्जसम्भवाः ॥
पाषाणान्तर्गता कीटा वज्राख्या प्रभविष्यथ ।
अद्यैव गण्डकी पुण्या गङ्गातुल्या महानदी ॥
गण्डक्यां गिरिराजस्य दक्षिणे दशयोजनम् ।
विस्तीर्णं तन्मनु क्षेत्रं पुण्यक्षेत्रं महीतले ।
चक्रतीर्थमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ॥
शालग्रामगता देवा देवी द्वारावतीगताः ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥
सर्व्वदेवप्रीतिकरा भुक्तिमुक्तिप्रदायिनी ।
भवन्तस्तान्तु पाषाणा ये तदन्तर्गता सुराः ।
प्रार्थितं स्वं विना सर्व्वे वज्रकीटा भवन्त्विति ।
अनेनैव तु गण्डक्याः पुत्रत्वं भवतामपि ॥
भविष्यति तदन्तश्च चिह्नं तद्दैवतोद्भवम् ।
विज्ञाय येऽर्च्चयिष्यन्ति सा प्रीता तस्य देवता ॥
न यन्त्रस्य न मूर्त्तेश्च न वृक्षस्यापि पूजनात् ।
सन्तोषो जायते तेषां गण्डक्यां मार्ज्जनाद्यथा ॥
इति विष्णुवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥*॥
कीदृक् पूज्या शिला विष्णोः किञ्चिद्रा कस्य वल्लभा ।
किं फलं चाधिकारी च केन मार्गेण तद्वद ॥
इति ब्रह्मवचः श्रुत्वा विष्णुर्वचनमब्रवीत् ।
स्वीयवर्णा शिला पूज्या ब्राह्मणाद्यैः सुखाप्तये ॥
स्निग्धा शिला मन्त्रसिद्धिं रूक्षा सिद्धिं करोति च ।
मेचका कीर्त्तिता धौताङ्गारवत् सा यशोहरा ॥
पाण्डुरूपार्थशमनी मलिना पापधीकरा ।
पीता पुत्रफलं दद्यादारवर्णा सुतान् हरेत् ॥
नीला संदिशते लक्ष्मीं धूमाभा हरते मतिम् ।
रोगप्रदा रक्तवर्णा सिन्दूराभा महाकालिम् ॥
दारिद्रकारिणी वक्रा समा सर्व्वार्थसाधिका ।

स्थूला निहन्ति चैवायुः सूक्ष्मा स्वल्पमतिं हरेत्
पूजाफलं लाञ्छितया निष्फलं लाञ्छनं विना।
कपिला चित्तवैकल्यं नेत्ररोगञ्च कर्वुरा ॥
भग्ना भङ्गकरी ज्ञेया बहुचक्रापमानताम् ।
लक्षणान्तरहीना च देवचक्रा वियोगताम् ॥
वृहन्मुखी कलत्रघ्नी वृहच्चक्रा सुतान् हरेत् ।
संलग्नचक्रा त्वसुखं बद्धचक्रा महागदम् ॥
भग्नचक्रा तु दारिद्र्यं सर्वनाशं त्वधोमुखी ।
कुष्ठादिकं व्यालमुखी विषमा विविधापदम् ॥
विकृतावर्त्तनाभिश्च विकारान् कुरुते बहून् ।
वंशच्छेदो गृहस्थानां नारसिंह्यां प्रजायते ॥
रेखार्त्ता दुःखदात्री च यथा सूक्ष्मा तथा सुखम् ।
यथा स्निग्धास्तथा लक्ष्मीस्तद्विभेदादतः शृणु ॥
लक्ष्मीहरिः स विज्ञेयो यत्र पद्मं सचक्रकम् ।
केवला वनमाला वा गृहस्थानामभीष्टदः ॥१॥
वासुदेवः स विज्ञेयो यद्द्वारं चक्रयुग्मकम् ।
निरन्तरं समं चापि स श्वेतः पापनाशनः ॥२॥
सङ्कर्षणः स विज्ञेयः प्राक् पश्चाच्चक्रयुग्मकम् ।
संलग्नपूर्वभागस्थं महद्रलः सुशोभनः ॥ ३ ॥
प्रद्युम्नः सूक्ष्मचक्रः स्याच्छिद्रं दीर्घं विचित्रितम्
सुस्थिरान्तर्वहिश्छिद्रं पीत इष्ट प्रदायकः ॥४॥
अनिरुद्धस्तु नीलाभो वर्त्तुलश्चातिशोभनः ।
रेखाद्वयन्तु तद्द्वारि पृष्ठं पद्मेन लाञ्छितम् ॥५॥
केशवः स तु विज्ञेयस्त्वेकं वा द्वयमेव वा ।
प्राग्वा पश्चाच्च चक्रं स्यात् चतुष्कोणः स भाग्यकृत् ॥ ६ ॥
नारायणः श्यामवर्णः नाभौ चक्रं तथोन्नतम् ।
दीर्घरेखासमायुक्तं दक्षिणे शुशिरं पृथु ॥ ७ ॥
हरिरूपा शिला सा स्याद्यस्या ऊर्द्धं सुखं भवेत् ।
हरिवद्दृश्यते द्वारं भुक्तिमुक्तिप्रदा तु सा ॥८॥
परमेष्ठी स विज्ञेयः पद्मचक्रान्वितस्तु यः ।
विल्वाकृतिश्च शुक्राभः पृष्ठे च शुषिरं महत् ॥९॥
विष्णुस्तु कृष्णवर्णः स्यात् स्थूलचक्रो सुशोभने ।
द्वारोपरि तथा रेखा दृश्यते मध्यदेशतः ॥१०॥
नारसिंहस्तु कपिलः पृथुचक्रो वृहन्मुखः ।
त्रयो वा पञ्च वा तत्र बिन्दवो गृहिणां न सत् ॥११॥
कपिलो नरसिंहस्तु गुड़लाचानिभो भवेत् ।
स्थूलचक्रद्वयं मध्ये द्वारे रेखा सुशोभना ॥१२॥
महान्नृसिंहो विज्ञेयः पूर्वोक्तैर्लक्षणैर्युतः ।
रेखाश्च केशराकारा मुखं दीर्घं भयानकम् ॥१३
लक्ष्मीनृसिंहो विज्ञेयश्चतुश्चक्रः सबिन्दुकः ।
पूर्वोक्तलक्षणैर्युक्तो वनमालाविराजितः ॥१४॥
वराहोऽसौ शक्तिलिङ्गे चक्रे च विषमे तथा ।
इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितो भवेत्१५
पृथ्वीवाराहनाम्नी सा या वराहाकृतिः शिला,
आभुग्ना चैव रेखैका गतराज्यप्रदायिका ॥१६॥
मत्स्याख्या सा शिला ज्ञेया बिन्दुत्रयविभूषिता
कांस्याकारा स्वर्णनिभा दीर्घा सा भुक्तिमुक्तिदा ॥१७॥

कूर्म्माख्या तु शिला पिष्ठे वर्त्तुला चोन्नता भवेत्
हरितं वर्णमाप्नन्तु कौस्तुभेन च चिह्निता ॥
शिलाकूर्म्मः स विज्ञेयः कूर्म्माकारस्तु यो भवेत्।
चक्राङ्किता तथा वृत्ता पूजिता सा पदप्रदा॥१८
हयग्रीवोऽङ्कुशाकारा रेखा चक्रा समीपगा ।
बहुबिन्दुसमायुक्तं पृष्ठं नीरदनीलकम् ॥१९॥
ज्ञेयः सौम्यहयग्रीवो हयग्रीवासमा शिला ।
दीर्घया लेखया युक्ता रेखा वा तादृशी भवेत् ॥२०॥
हयशीर्षः स विज्ञेयो मुखं यस्य हयाकृति ।
पद्माकृति भवेद्वापि साक्षमालं शिरस्तथा ॥२१॥
वैकुण्ठस्तिलवर्णाभश्चक्रमेकं तथा ध्वजम् ।
द्वारोपरि तथा रेखा पूज्याकारा सुशोभना॥२२
श्रीधरस्तु तथा देवश्चिह्नितो वनमालया ।
कदम्बकुसुमाकाररेखापञ्चकभूषितः ॥२३॥
वामनः स तु विज्ञेयो योऽतिह्रस्वश्च वर्त्तुलः ।
अतसीकुसुमप्रख्यो बिन्दुना परिशोभितः ॥२४॥
दधिवामननामा तु ऊर्द्धाधश्चक्रसंयुतः ।
महाद्युतिरतिह्रस्वः सुभक्षः क्षेमदायकः ॥२५॥
सुदर्शनस्तथा देवः श्यामवर्णो महाद्युतिः ।
वामपार्श्वे तथा चक्रं रेखैकैव तु दक्षिणे ॥२६॥
सहस्रार्ज्जुननामासौ नानारेखामयो भवेत् ।
चक्राकारा यन्त्रपङ्क्तिः स नष्टद्रव्यदायकः॥२७
स्थूलो दामोदरो यस्य मध्ये चक्रं प्रतिष्ठितम्।
दूर्वाभं द्वारसङ्कीर्णः पीतरेखा धनप्रदः ॥२८॥
राधादामोदरो ज्ञेय ऊर्द्धाधश्चक्रवद्बिलम् ।
नातिदीर्घं मुखं मध्ये लम्बरेखा स भोगदः॥२९
दामोदरः स विज्ञेयो यश्चक्रद्वयलाञ्छितः ।
सूक्ष्मं भवेच्च विवरं पूजितः सुखदः सदा ॥३०॥
अनन्तो बहुवर्णः स्यान्नागभोगेन चिह्नितः ।
अनेकचक्रसंभिन्नः सर्वकामफलप्रदः ॥३१॥
पुरुषोत्तमनामासौ यस्य दिक्षु विदिक्षु च ।
ऊर्द्धान्यास्यानि दृश्यन्ते पुरुषार्थफलप्रदः॥३२॥
योगेश्वरः स विज्ञेयो लिङ्गं यस्य शिरोगतम् ।
ब्रह्महत्यादिपापानां नाशको योगसिद्धिदः॥३३॥
पद्मनाभस्तथा रक्तः पङ्कजच्छत्रसंयुतः ।
तुलस्या पूजितो नित्यं दरिद्रस्त्वीश्वरो भवेत्३४
रश्मिज्वालो हिरण्याक्षश्चन्द्राभः स्फटिकोपमः ।
अथवा जायते नानास्वर्णरेखाभिरन्वितः ॥३५॥
गरुड़ः स तु विज्ञेयो मध्ये पक्षद्वयान्विते ।
सुदीर्घा दृश्यते रेखा स सर्पविषनाशकः ॥३६॥
जनार्द्दनः स विज्ञेयः केवलानि स्फुटानि च ।
यस्योदरे तु चक्राणि चत्वारि पिहितानि तु॥३७
लक्ष्मीनारायणो ज्ञेयो वनमालाङ्कितोदरः ।
सूक्ष्मद्वारश्चतुश्चक्रो भुक्तिमुक्तिप्रदायकः ॥३८॥
हृषीकेशः स विज्ञेयो योऽर्द्धचन्द्राकृतिर्भवेत् ।
तमभ्यर्च्य लभेत् स्वर्गं विषयांश्च समीहितान् ॥ ३९ ॥
लक्ष्मीनरहरिर्ज्ञेयः कृष्णवर्णः सबिन्दुकः ।
वामपार्श्वे समे चक्रे गृहस्थाभीष्टदायकः ॥४०
त्रिविक्रमस्तु विज्ञेयः श्यामवर्णो महाद्युतिः ।

वामपार्श्वे चक्रयुग्ममेकरेखा तु दक्षिणे ॥४१॥
कृष्णो ज्ञेयः शिला कृष्णा सचक्रा वा विचक्रिका ।
प्रदक्षिणावर्त्तकृतवनमालाविभूषिता ॥ ४२ ॥
चतुर्म्मुखः स विज्ञेयो द्वे चक्रे मध्यदेशतः ।
चतस्रः पार्श्वगा रेखा वेदशास्त्रागमप्रदः ॥४३॥
विष्णोर्भेदा इमे प्रोक्ता अत्रैवावाहयेद्धरिम् ।
विसर्ज्जयेच्च पूजान्ते प्रतिष्ठां नात्र कारयेत् ॥*॥
शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि ।
असमा नैव पूज्यन्ते एकः पूज्यतमो मतः ॥
शिला द्वादश यो नित्यं भक्त्या संपूजयेन्नरः ।
दिने दिने धर्म्मवृद्धिः पापनाशश्च जायते ॥
शालग्रामशिलां यस्तु भक्त्या संपूजयेन्नरः ।
शतं दिनानि यस्तेन कृतः कामः स सिध्यति ॥*॥
शालग्रामा मत्स्वरूपाः शृणु तेषान्तु लक्षणम्।
यत्सेवनाद्भवेदिष्टमिह लोके परत्र च ॥
शिवनाभः स विज्ञेयः सलिङ्गाकारताङ्गतः ।
स्वयम्भुलिङ्गाकृतिमान् मन्त्रसिद्धिविधायकः॥१
त्र्यम्बकः स तु विज्ञेयो यो बिन्दुत्रयभूषितः ।
शूलाकारा तथा रेखा गतपुंस्त्वप्रदायकः ॥२॥
धूर्ज्जटिः स तु विज्ञेयो यत्र रेखा जटासमा ।
तिस्रो यत्र प्रदृश्यन्ते सोऽर्च्चितो ज्ञानदायकः३
शम्भुस्तु पाण्डरो ज्ञेयो बिन्दुकृष्णस्तु मस्तके ।
विल्वप्रमाणस्तेजस्वी पूजितः स्त्रीवशङ्करः ॥४॥
ईश्वरः स तु विज्ञेयो रक्तो बिन्दुस्तु मस्तके ।
एकचक्रो द्विचक्रो वाभ्यन्तरेऽधश्च गोपदम् ॥५॥
मृत्युञ्जयः स विज्ञेयः स्वल्पमृत्युविनाशकः ।
अधश्चक्रं तदूर्द्धञ्च श्वेता रेखा त्रिशूलवान्॥६॥
चन्द्रशेखरनामासावर्द्धचन्द्राकृतिस्तु के ।
मध्ये चक्रद्वयं तस्य सेवनाद्रोगनाशनम् ॥ ७ ॥
रुद्रः स एव विज्ञेयः कपिलो मूर्द्ध्नि रक्षितः ।
चक्रमध्ये भवेद्रेखा मारयेद्रिपुसन्ततिम् ॥८॥*॥
शालग्रामानथो वक्ष्ये शक्तिकोटसमुद्भवान् ।
येषां पूजनतो देवी भवानी सुप्रसीदति ॥
श्रीविद्या सा तले चक्रमूर्द्धे छत्रं प्रदृश्यते ।
वाह्ये घण्टाङ्कितो मूर्द्धा स्निग्धा श्यामाखिलेष्टदा ॥ १ ॥
महाकाली तु सा ज्ञेया योनिचिह्नसमन्विता॥२
द्विच्छिद्राद्या सर्वशिला त्रिकोणेनाङ्किता च या,
यदायुधाकृतिश्चोर्द्धं तां देवीं तत्र निर्द्दिशेत् ॥
देवीशिला सचक्रा या दक्षमार्गेण तां यजेत् ।
सार्च्चिता वाममार्गेण लोकद्वयसुखावहा ॥
या चक्ररहिता देवी शिला तां वामतोऽर्च्चयेत् ।
स्पर्शकार्य्येण विप्राणां नगभां चोभक्रद्भवेत्॥*॥
सौरिशिला दुर्लभैव प्रायः कलियुगे सुराः ।
स्फटिकाभा भवेत् सा तु धर्म्मयुक्ता विमुञ्चति ॥
तुलस्योर्द्ध स्थिते वह्निं साभिसिक्ता प्रवर्षणम् ।
कुरुते शपथे मिथ्या कृते स्यात् कुष्ठकारिका॥*
गणेशः स तु विज्ञेयः स्वल्पशुण्डाङ्कितो भवेत् ।
शुण्डाकारा शिला वापि गजाननसमापि वा॥*
यस्या मध्ये महच्चक्रं सूक्ष्मचक्रञ्च यद्दिशि ।

सा शिला तस्य दिव्यस्य सेव्या तद्दिशि राज्यदा ॥*॥
अर्द्धचन्द्राकृतिर्यत्र दृश्यते शकलद्वयम्।
सा तु चन्द्रशिला तत्रसयुक्ता भौमशिला मता ॥ * ॥
बाणाकारेण चिह्नेन ज्ञेया बुधशिला सुरा:।
दीर्घेण चतुरस्रेण युक्ता गुरुशिला मता ॥*॥
पञ्चकोणा तु शुक्रस्य चापाकारा शनेर्म्मता।
सर्पाकारा तु राहो: स्यात् केतोस्तु ध्वज-रूपिणी ॥ * ॥
प्राप्ते कलियुगे घोरे वामाचारविमिश्रिते।
भक्ष्याभक्ष्यविचारादिरहिते म्लेच्छसङ्कुले ॥
कामक्रोधादिभिर्व्याप्ते जने स्त्रीभिर्विनिर्ज्जिते।
क्व शिष्य: क्व गुरुर्मन्त्र: क्व जप: क्व च सिद्धय: ॥
अयुताब्दे कलेर्याति त्यजेद्विष्णुशिला महीम्।
तदर्द्धाज्जाह्नवीतोयं तदर्द्धाद्देवताशिला ॥
जप एव कलौ श्रेयान् शालग्रामार्च्चनं यथा ॥”
इति मेरुतन्त्रे ५ पटल: ॥
अपि च।

तुलस्युवाच।
“हे नाथ ते दया नास्ति पाषाणसदृशस्य च।
छलेन धर्म्मभङ्गेन मम स्वामी त्वया हत: ॥
पाषाणहृदयस्त्वञ्च दयाहीनो यत: प्रभो।
तस्मात् पाषाणसदृशस्त्वं भवेह हऽधुना ॥

श्रीभगवानुवाच।
अहञ्च शैलरूपी च गण्डकीतीरसन्निधौ।
अधिष्ठानं करिष्यामि भारते तव शापत: ॥
वज्रकीटाश्च कृमयो वज्रदंष्ट्राश्च तत्र वै।
तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम् ॥
एकद्वारे चतुश्चक्रं वनमालाविभूषितम्।
नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥
एकद्वारे चतुश्चक्रं नवीननीरदोपमम्।
लक्ष्मीजनार्द्दनं ज्ञेयं रहितं वनमालया ॥
द्वारद्वये चतुश्चक्रं गोष्पदेन समन्वितम्।
रघुनाथाभिधं ज्ञेयं वेष्टितं वनमालया ॥
अतिक्षुद्रं द्विचक्रन्तु नवीननीरदप्रभम्।
दधिवामनं विज्ञेयं गृहिणाञ्च सुखप्रदम् ॥
अतिक्षुद्रं द्विचक्रञ्च वनमालाविभूषितम्।
श्रीधरं देवि विज्ञेयं श्रीपदं गृहिणां सदा ॥
स्थूलञ्च वर्त्तुलाकारं रहितं वनमालया।
द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम् ॥
मध्यमं वर्त्तुलाकारं द्विचक्रं बाणविक्षतम्।
रणरामाभिधं ज्ञेयं शरतूणसमन्वितम् ॥
चतुर्द्दशचक्रं स्थूलञ्च नवीनजलदप्रभम्।
अनन्ताख्यञ्च विज्ञेयं चतुर्वर्गफलप्रदम् ॥
मध्यमं सप्तचक्रञ्च छत्रतूणसमन्वितम्।
राजराजेश्वरं ज्ञेयं राजसम्पत्करं नृणाम् ॥
चक्राकारं द्विचक्रञ्च सश्रीकं जलदप्रभम्।
सगोष्पदं मध्यमञ्च विज्ञेयं मधुसूदनम् ॥
सुदर्शनञ्चैकचक्रं गुप्तचक्रं गदाधरम्।
द्विचक्रं हयवक्त्राभं हयग्रीवं प्रकीर्त्तितम् ॥
अतीवविस्तृतास्यञ्च द्विचक्रं विकटं सति।
नरसिंहाभिधं ज्ञेयं सद्यो वैराग्यदं नृणाम् ॥
द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम्।
लक्ष्मीनृसिंहं विज्ञेयं गृहिणां सुखदं सदा ॥
द्वारदेशे द्विचक्रञ्च सश्रीकञ्च समं स्फुटम्।
वासुदेवञ्च विज्ञेयं सर्वकामफलप्रदम् ॥
प्रद्युम्नं सूक्ष्मचक्रञ्च नवीननीरदप्रभम्।
शुषिरे छिद्रबहुलं गृहिणाञ्च सुखप्रदम् ॥
द्वे चक्रे चैकलग्ने तु पृष्ठे यत्र तु पुष्कलम्।
सङ्कर्षणन्तु विज्ञेयं सुखदं गृहिणां सदा ॥
अनिरुद्धञ्च पीताभं वर्त्तुलञ्चातिशोभनम्।
सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिण: ॥*॥
शालग्रामशिला यत्र तत्र सन्निहितो हरि:।
तत्रैव लक्ष्मीर्वसति सर्वतीर्थसमन्विता ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
तानि सर्व्वाणि नश्यन्ति शालग्रामशिलार्च्चनात्
छत्राकारे भवेद्राज्यं वर्त्तुले च भवेत् श्रिय:।
दु:खञ्च शकटाकारे शूलाग्रे मरणं ध्रुवम् ॥
विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेव च।
लग्नचक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम् ॥
व्रतं दानं प्रतिष्ठा च श्राद्धञ्च देवपूजनम्।
शालग्रामशिलायाश्चैवाधिष्ठानात् प्रशस्तकम् ॥
स स्नात: सर्वतीर्थेषु सर्वयज्ञेषु दीक्षित:।
सर्वदाने च यत् पुण्यं प्रादक्षिण्ये भुवस्तथा ॥
सर्वयज्ञेषु तीर्थेषु व्रतेष्वनशनेषु च।
पाठे चतुर्णां वेदानां तपसां करणे सति।
तत् पुण्यं लभते नूनं शालग्रामशिलार्च्चनात् ॥
शालग्रामशिलातोयं नित्यं भुङ्क्ते च यो नर:।
सुरेप्सितं प्रसादञ्च जन्ममृत्युजराहरम् ॥
तस्य स्पर्शञ्च वाञ्छन्ति तीर्थानि निखिलानि च
जीवन्मुक्तो महापूतोऽप्यन्ते याति हरे: पदम् ॥
तत्रैव हरिणा सार्द्धमसंख्यं प्राकृतं लयम्।
पश्यन्त्येव हि दास्येव नियुक्तो दास्यकर्म्मणि ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च
तं दृष्ट्वा च भिया यान्ति वैनतेयमिवोरगा: ॥
तत्पादपद्मरजसा सद्य: पूता वसुन्धरा।
पुंसां लक्षं तत्पितॄणां निस्तरेत्तस्य जन्मनि ॥
शालग्रामशिलातोयं मृत्युकाले च यो लभेत्।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥
निर्व्वाणमुक्तिं लभते कर्म्मभोगाद्विमुच्यते।
विष्णुपादप्रलीनश्च भविष्यति न संशय: ॥
शालग्रामशिलां धृत्वा मिथ्यावाक्यं वदेत्तु य:।
स याति कूर्म्मदंष्ट्रञ्च यावद्वै ब्रह्मणो वय: ॥
शालग्रामशिलां धृत्वा स्वीकारं यो न पालयेत्
स प्रयात्यसिपत्रञ्च लक्षमन्वन्तरावधि ॥
तुलसीपत्रविच्छेदं शालग्रामे करोति य:।
तस्य जन्मान्तरे कान्ते स्त्रीविच्छेदो भविष्यति ॥
तुलसीपत्रविच्छेदं शङ्खे यो हि करोति च।
भार्य्याहीनो भवेत् सोऽपि रोगी च सप्तजन्मसु ॥
शालग्रामञ्च तुलसीं शङ्खञ्चैकत्र एव च।
यो रक्षति महाज्ञानी स भवेत् श्रीहरिप्रिय: ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १९ अध्याय: ॥*॥
शूद्राणां तत्पूजनेऽनधिकारो यथा,—
“विप्रक्षत्त्रियवैश्यानां शालग्रामशिलार्च्चने।
अधिकारो न शूद्राणां हरेरर्च्चार्च्चने तथा ॥”
इति तत्रैव जन्मखण्डे २१ अध्याय: ॥*॥
शालग्रामे सदा विष्णो: स्थितिस्तत्पूजने विशेषश्च यथा,—

भूमिरुवाच।
“उक्ता या: प्रतिमा: सर्व्वा: सुवर्णादिविनिर्म्मिता:।
तासु तिष्ठसि सर्व्वासु शालग्रामे च सर्वदा ॥
कति पूज्या गृहादौ च अविशेषस्तु पूजने।
विशेषो वा भवेत्तन्मे रहस्यं वद माधव ॥

वराह उवाच।
गृहे लिङ्गद्वयं नार्च्च्यं शालग्रामद्वयं तथा।
द्वे चक्रे द्वारकायास्तु नार्च्च्ये सूर्य्यद्वयं तथा ॥
शालग्रामशिला भग्ना पूजनीया सचक्रका।
खण्डिता स्फुटिता वापि शालग्रामशिला शुभा
शिला द्वादश वै देवि शालग्रामसमुद्भवा:।
विधिवत् पूजिता येन तस्य पुण्यं वदामि ते ॥
कोटिद्वादशलिङ्गैस्तु पूजितै: स्वर्णपङ्कजै:।
यत् स्यात् द्वादशकल्पैस्तु दिनेनैकेन तद्भवेत् ॥
य: पुन: पूजयेद्भक्त्या शालग्रामशिलाशतम्।
तत्फलं नैव शक्तोऽहं वक्तुं वर्षशतैरपि ॥
शालग्रामो न स्प्रष्टव्यो हीनवर्णैर्वसुन्धरे।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मत: ॥
मोहाद्य: संस्पृशेत् शूद्रो योषिद्वापि कदाचन।
स पतेन्नरके घोरे यावदाहूतसंप्लवम् ॥
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे।
दूरादेवास्पृशन् पूजां कारयेत् सुसमाहित: ॥
चरणामृतपानेन सर्वपापक्षयो भवेत् ॥
अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम्।
शालग्रामशिलायोगात् पावनं तद्भवेत् सदा ॥
दद्याद्भक्ताय यो देवि शालग्रामशिलां नर:।
सुवर्णसहिता तेन सपर्वतवनाकरा।
ससमुद्रा भवेद्दत्ता सप्तद्वीपा वसुन्धरा ॥
शालग्रामशिलायास्तु मौल्यमुद्घाटयेत् क्वचित्।
विक्रेता क्रयकर्त्ता वा नरके वै पतेत् ध्रुवम् ॥
पूजाफलं न शक्येत वक्तुं वर्षशतैरपि।
एतत्ते कथितं गुह्यं प्रतिमास्थापनं प्रति ॥
शालग्रामे विशेषश्च लिङ्गादीनाञ्च यो भवेत्।
पूजनादौ विधिश्चापि किमन्यच्छ्रोतुमिच्छसि ॥”
इत्यादि वाराहे रौप्यसौवर्णार्च्चास्थापननामाध्याय: ॥ * ॥ अथ शालग्रामशिलामूर्त्तिनिरूपणम्।
“चतुर्विंशतिमूर्त्ति: स शालग्रामशिलास्थिति:।
द्वारकादिशिलासंस्थो ध्येय: पूज्योऽपि वा हरि: ॥
मनसोऽभीप्सितं प्राप्य देवो वैमानिको भवेत्।
निष्कामो मुक्तिमाप्नोति मूर्त्तीर्ध्यायन् स्तुवन् जपन् ॥”
इत्यादि गारुडे मूर्त्तामूर्त्तध्यानं ४४ अध्याय: ॥
अपि च।
“शङ्खचक्रगदापद्मी केशवाख्यो गदाधर:।
साब्जकौमोदकीचक्रशङ्खी नारायणो विभु: ॥

